४२ राजा–मा मा भवानेवम् । मधुकरसंत्रासः परिहार्यः । पश्य,

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३ ॥

तस्मादिहैवासिष्यावहे ।

विदूषकः–एव्वं होदु ॥ [ एवं भवतु । ]

३ ( उभावुपविशतः )

चेटी–भट्टिदारिए ! रुद्धा खु म्ह वयं ॥ [ भर्तृदारिके ! रुद्धाः खलु स्मो वयम् । ]

६ पद्मावती–दिट्ठिआ उवविट्ठो अय्यउत्तो ॥ [ दिष्ट्योपविष्ट आर्यपुत्रः । ]

वासवदत्ता–( आत्मगतम् ) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो ॥ [ दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः । ]

९ चेटी–भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठि ॥ [ भर्तृदारिके ! साश्रुपाता खल्वार्याया दृष्टिः । ]

वासवदत्ता–एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा
१२ पडिदेण सोदआ मे दिट्ठी ॥ [ एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः । ]

पद्मावती–जुज्जइ ॥ [ युज्यते । ]

१५ विदूषकः–भो ! सुण्णं क्खु इदं पमदवणं। पुच्छिदव्वं किञ्चि अत्थि। पुच्छामि भवन्तं ॥ [ भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किंचिदस्ति । पृच्छामि भवन्तम् । ]

१८ राजा–छन्दतः ।

विदूषकः–का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा ॥ [ का भवतः प्रिया, तदानीं तत्रभवती वासवदत्ता
२१ इदानीं पद्मावती वा । ]

राजा - किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ।

पद्मावती— हला ! जादिसे सङ्कडे निक्खित्तो अय्यउत्तो । [ हला ! यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः । ]

वासवदत्ता— ( आत्मगतम् ) अहं अ मन्दभाआ ॥ [ अहं च मन्दभागा । ]

विदूषक.— सेरं सेरं भणादु भवं । एक्का उवरदा, अवरा असण्णिहिदा ॥ [ स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपरासंनिहिता । ]

राजा—वयस्य ! न खलु न खलु ब्रूयाम् । भवांस्तु मुखरः ।

पद्मावती— एत्तएण भणिदं अय्यउत्तेण ॥ [ एतावता भणितमार्यपुत्रेण । ]

विदूषक.— भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं । एसा सन्दट्ठा मे जीहा ॥ [ भो ! सत्येन शपामि, कस्मा अपि नाख्यास्यामि ! एषा सदष्टा मे जिह्वा । ]

राजा—नोत्सहे, सखे ! वक्तुम् ।

पद्मावती-अहो इमस्स पुरोभाइदा । एत्तिएण हिअअं ण जाणादि ॥ [ अहो अस्य पुरोभागिता । एतावता हृदय न जानाति । ]

विदूषक — किं ण भणादि मम । अणाचक्खिअ इमादो सिलावट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं ॥ [ किं न भणति मम । अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम् । एष रुद्धोऽत्रभवान् । ]

राजा— किं बलात्कारेण ।

विदूषक·— आम, बलक्कारेण ॥ [ आम बलात्कारेण । ]

राजा-तेन हि पश्यामस्तावत् ।

विदूषकः पसीददु पसीददु भवं । वअस्सभावेण साविदो सि, जइ सच्चं ण भणासि ॥ [ प्रसीदतु प्रसीदतु भवान् । वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि । ]

राजा–का गतिः । श्रूयताम् ।

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥ ४ ॥

वासवदत्ता–( आत्मगतम् ) भोदु, भोदु । दिण्णं वेदणं इमस्स परिखेदस्स । अहो अव्वादवासं पि एत्थ बहुगुणं सम्पज्जइ ॥ [ भवतु भवतु । दत्तं वेतनमस्य परिखेदस्य । अहो अज्ञातवासोऽप्यत्र बहुगुणः संपद्यते । ]

चेटी–भट्टिदारिए ! अदक्खिण्णो खु भट्टा ॥ [ भर्तृदारिके ! अदाक्षिण्यः खलु भर्ता । ]

पद्मावती–हला ! मा मा एव्वं । सदक्खिण्णो एव्व अय्यउत्तो, जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि ॥ [ हला ! मा मैवम् । सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्तायाः गुणान् स्मरति । ]

वासवदत्ता–भद्दे ! अभिजणस्स सदिसं मन्तिदं । [ भद्रे ! अभिजनस्य सदृशं मन्त्रितम् । ]

राजा–उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया, तदा वासवदत्ता, इदानीं पद्मावती वा ।

पद्मावती–अय्यउत्तो पि वसन्तओ संवुत्तो ॥ [ आर्यपुत्रोऽपि वसन्तकः संवृत्तः । ]

विदूषकः– किं मे विप्पलविदेण । उभओ वि तत्तहोदीओ मे बहुमदाओ ॥ [ किं मे विप्रलपितेन । उभे अपि तत्रभवत्यौ मे बहुमते । ]

राजा–वैधेय ! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे ।

विदूषकः-किं मं पि बळ्कारेण ॥ [ किं मामपि बलात्कारेण । ]

राजा-अथ किं, बलात्कारेण ।

विदूषकः-तेण हि ण सक्कं सोदुं ॥ [ तेन हि न शक्यं श्रोतुम् । ]

राजा-प्रसीदतु प्रसीदतु महाब्राह्मणः । स्वैरं स्वैरमभिधीयताम् ।

विदूषकः-इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहुमदा । तत्तहोदी पदुमावदी तरुणी दंसणीआ[1] अकोवणा अणहङ्कारा महुरवाआ सदक्खिण्ण्आ । अअं च अवरो महन्तो गुणो, सिणिद्धेण भोअणेण मं पच्चुगच्छइ[2] 'कहिं णु खु गदो अय्यवसन्तओ' त्ति ॥ [ इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या । अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति कुत्र न खलु गत आर्य वसन्तक इति । ]

वासवदत्ता-भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं ॥ [ भवतु भवतु, वसन्तक ! स्मरेदानीमेतत् । ]

राजा-भवतु भवतु, वसन्तक ! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै ।

विदूषकः-अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु उवरदा वासवदत्ता ॥ [ अविधा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता । ]

राजा- (सविषादम्) एवम् । उपरता वासवदत्ता ।

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ५ ॥

---

१. दस्सणीआ ।

२. म पच्चुगच्छइ वासवदत्ता 'कहिं णु etc.'

पद्मावती–रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ। [ रमणीयः खलु कथायोगो नृशंसेन विसंवादितः। ]

वासवदत्ता–( आत्मगतम् ) भोदु भोदु, विस्सत्थम्हि। अहो पिअं णाम, ईदिसं वअणं अपच्चक्खं सुणीअदि॥ [ भवतु भवतु, विश्वस्तास्मि। अहो प्रियं नाम, ईदृशं वचनमप्रत्यक्षं श्रूयते। ]

विदूषकः–धारेदु धारेदु भवं। अणदिक्कमणीओ हि विही। ईदिसं दाणिं एदं॥ [ धारयतु धारयतु भवान्। अनतिक्रमणीयो हि विधिः। ईदृशमिदानीमेतत्। ]

राजा– वयस्य! न जानाति भवानवस्थाम्। कुतः,

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम्॥ ६॥

विदूषकः–अस्सुपादकिलिण्णं खु तत्तहोदो मुहं। जाव मुहोदअं आणेमि। ( निष्क्रान्तः )॥ [ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम्। यावन्मुखोदकमानयामि। ]

पद्मावती–अय्ये! बप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं। जाव णिक्कमम्ह॥ [ आर्ये! बाष्पाकुलपटान्तरितमार्यपुत्रस्य मुखम्। याव-न्निष्क्रामामः। ]

वासवदत्ता–एव्वं होदु। अहव चिट्ठ तुवं। उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं। अहं एव्व गमिस्सं॥ [ एवं भवतु। अथवा तिष्ठ त्वम्। उत्कण्ठितं भर्तारमुज्झित्वायुक्तं निर्गमनम्। अह-मेव गमिष्यामि। ]

चेटी–सुट्ठु अय्या भणादि। उवसप्पदु दाव भट्टिदारिआ॥ [ सुष्ठ्वार्या भणति। उपसर्पतु तावद् भर्तृदारिका। ]

पद्मावती–किं णु खु पविसामि ॥ [ किं नु खलु प्रविशामि । ]

वासवदत्ता–हला । पविस । ( इत्युक्त्वा निष्क्रान्ता ) ॥ [ हला ! प्रविश । ]

( प्रविश्य )

विदूषकः–( नलिनीपत्रेण जलं गृहीत्वा ) एसा तत्तहोदी पदुमावदी ॥ [ एषा तत्रभवती पद्मावती । ]

पद्मावती–अय्य वसन्तअ ! किं एदं ॥ [ आर्य वसन्तक ! किमेतत् । ]

विदूषकः–एदं इदं । इदं एदं ॥ [ एतदिदम् । इदमेतत् । ]

पद्मावती–भणादु भणादु अय्यो भणादु ॥ [ भणतु भणत्वार्यो भणतु । ]

विदूषकः–भोदि ! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुपादं खु तत्तहोदो मुहं । ता गण्हदु होदी इदं मुहोदअं ॥ [ भवति ! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकम् । ]

पद्मावती–( आत्मगतम् ) अहो सदक्खिण्णस्स जणस्स परिजणो वि सदक्खिण्णो एव्व होदि । ( उपेत्य ) जेदु अय्यउत्तो । इदं मुहोदअं ॥ [ अहो सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति । जयत्वार्यपुत्रः । इदं मुखोदकम् । ]

राजा–अये पद्मावती । ( अपवार्य ) वसन्तक किमिदम् ।

विदूषकः–( कर्णे ) एव्वं विअ ॥ [ एवमिव । ]

राजा–साधु वसन्तक साधु ! । ( आचम्य ) पद्मावति ! आस्यताम् ।

पद्मावती–जं अय्यउत्तो आणवेदि । ( उपविशति ) [ यदार्यपुत्र आज्ञापयति । ]

राजा–पद्मावति !

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥

(आत्मगतम्)

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ८ ॥

विदूषकः- उइदं तत्तहोदो मअधराअस्स अवरण्हकाले भवन्तं अग्गदो करिअ सुहिज्जणदंसणं । सक्कारो हि णाम सक्कारेण पडि-
३ च्छिदो पीदिं उप्पादेदि । ता उट्ठेदु दाव भवं ॥ [ उचितं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम् । सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति । तदुत्तिष्ठतु तावद् भवान् । ]

राजा-बाढम् । प्रथमः कल्पः । (उत्थाय)

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥ ९ ॥

(निष्क्रान्ताः सर्वे)

इति चतुर्थोऽङ्कः ।

---

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति पद्मिनिका)

पद्मिनिका-महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं ॥
३ [ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् । ]

(प्रविश्य)

मधुकरिका-हला ! इअम्हि । किं करीअदु ॥ [ हला ! इयमस्मि ।
६ किं क्रियताम् । ]

पद्मिनिका-हला किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति ॥ [ हला किं न जानासि त्वं भर्तृ-

दारिका पद्मावती शीर्षवेदनया दुःखितेति । ]

मधुकरिका–हद्धि ॥ [ हा धिक् । ]

पद्मिनिका–हला ! गच्छ सिग्घं, अय्यं आवन्तिअं सद्दावेहि । केवळं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि । तदो सअं एव्व आगमिस्सदि ॥ [ हला ! गच्छ शीघ्रम्, आर्यामावन्तिकां शब्दापय । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति । ]

मधुकरिका–हला ! किं सा करिस्सदि ॥ [ हला किं सा करिष्यति । ]

पद्मिनिका–सा हु दाणिं महुराहि महुराहि भट्टिदारिआए सीसवेदणं विणोदेदि ॥ [ सा खल्विदानीं मधुराभिः कथाभिर्भर्तृदारिकायाः शीर्षवेदनां विनोदयति । ]

मधुकरिका–जुज्जइ । कहिं सअणीयं रइदं भट्टिदारिआए ॥ [ युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः । ]

पद्मिनिका–समुद्दगिहके किल सेज्जात्थिण्णा । गच्छ दाणिं तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि ॥ [ समुद्रगृहके किल शय्यास्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्विष्यामि । ]

मधुकरिका–एव्वं होदु । ( निष्क्रान्ता ) [ एवं भवतु । ]

पद्मिनिका–कहिं दाणिं अय्यवसन्तअं पेक्खामि । [ कुत्रेदानीमार्यवसन्तकं पश्यामि । ]

( ततः प्रविशति विदूषकः )

विदूषकः–अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिअमाणो[1] अच्चन्तसुहावहे मङ्गळोसवे मदणग्गिदाहो अहिअदरं वड्ढइ । ( पद्मिनिकां विलोक्य )

[1] °समीरिअस्स

अयि पदुमिणिआ । पदुमिणिए ! किं इह वत्तदि ॥ [ अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीर्यमाणोऽत्यन्तसुखावहे मंगलोत्सवे मदनाग्निदाहोऽधिकतरं वर्तते । अयि पद्मिनिका ! पद्मिनिके ! किमिह वर्तते । ]

पद्मिनिका–अय्य वसन्तअ ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति ॥ [ आर्य वसन्तक ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति । ]

विदूषकः–भोदि ! सच्चं, ण जाणामि ॥ [ भवति ! सत्यं, न जानामि । ]

पद्मिनिका–तेण हि भट्टिणो णिवेदेहि णं । जाव अहं वि सीसाणुलेवणं तुवारेमि ॥ [ तेन हि भर्त्रे निवेदयैनाम् । यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

विदूषकः–कहिं सअणीअं रइदं पदुमावदीए ॥ [ कुत्र शयनीयं रचितं पद्मावत्याः । ]

पद्मिनिका–समुद्दगिहके किल सेज्जात्थिण्णा ॥ [ समुद्रगृहके किल शय्यास्तीर्णा । ]

विदूषकः–गच्छदु भोदी । जाव अहं वि तत्तहोदो णिवेदइस्सं ॥ [ गच्छतु भवती । यावदहमपि तत्रभवते निवेदयिष्यामि । ]

( निष्क्रान्तौ )

प्रवेशकः ।

---

( ततः प्रविशति राजा )

राजा–

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः ।

लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

(प्रविश्य)

विदूषकः–तुवरदु तुवरदु दाव भवं ॥ [ त्वरतां त्वरतां तावद्
३ भवान् । ]

राजा–किमर्थम् ।

विदूषकः–तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा ॥ [ तत्र-
६ भवती पद्मावती शीर्षवेदनया दुःखिता । ]

राजा–कैमवाह ।

विदूषकः–पदुमिणिआए कहिदं ॥ [ पद्मिनिकया कथितम् । ]

९ राजा–भोः ! कष्टं

रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ।

विदूषकः–समुद्दगिहके किल सेज्जात्थिण्णा ॥ [ समुद्रगृहके किल
३ शय्यास्तीर्णा । ]

राजा–तेन हि तस्य मार्गमादेशय ।

विदूषकः–एदु एदु भवं । [ एत्वेतु भवान् । ] ( उभौ परिक्रामतः )

६ विदूषकः–इदं समुद्दगिहकं । पविसदु भवं ॥ [ इदं समुद्रगृहकम् ।
प्रविशतु भवान् । ]

राजा–पूर्वं प्रविश ।

९ विदूषकः–भो ! तह । (प्रविश्य) अविहा, चिट्ठदु, चिट्ठदु दाव
भवं । [ भो ! तथा अविधा, तिष्ठतु, तिष्ठतु तावद् भवान् । ]

राजा–किमर्थम् ।

विदूषकः–एसो खु दीवप्पभावसूइदरूवो वसुधातळे परिवत्तमाणो अअं काओदरो । [ एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः । ]

राजा–( प्रविश्यावलोक्य सस्मितम् ) अहो सर्पव्यक्तिर्वैधेयस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना
किंचित् करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

विदूषकः–( निरूप्य ) सुट्ठु भवं भणादि । ण हु अअं काओदरो । ( प्रविश्यावलोक्य ) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ सुष्ठु भवान् भणति । न खल्वयं काकोदरः । तत्रभवती पद्मावतीहागत्य निर्गता भवेत् । ]

राजा–वयस्य ! अनागतया भवितव्यम् ।

विदूषकः–कहं भवं जाणादि । [ कथं भवान् जानाति । ]

राजा–किमत्र ज्ञेयम् । पश्य,

शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।
रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥ ४ ॥

विदूषकः–तेण हि इमस्सिं सय्याए मुहुत्तअं उपविसिअ तत्तहोदिं पधियालेदु भवं ॥ [ तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान् । ]

राजा—बाढम् । ( उपविश्य ) वयस्य ! निद्रा मां बाधते । कथ्यतां काचित् कथा ।

विदूषकः—अहं कहइस्सं । हों त्ति करेदु अत्तभवं ॥ [ अहं कथयिष्यामि । हों इति करोत्वत्रभवान् । ]

राजा—बाढम् ।

विदूषकः—अत्थि णअरी उज्जइणी णाम । तहिं अहिअरमणीआणि उदअह्लाणाणि वत्तन्ति किळ ॥ [ अस्ति नगर्युज्जयिनी नाम । तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल । ]

राजा—कथमुज्जयिनी नाम ।

विदूषकः—जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं ॥ [ यद्यनभिप्रेतैषा कथा अन्या कथयिष्यामि । ]

राजा—वयस्य ! न खलु नाभिप्रेतैषा कथा । किं तु,

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

अपि च,

बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

विदूषकः—भोदु, अण्णं कहइस्सं । अत्थि णअरं बम्हदत्तं णाम । तहिं किळ राआ कंपिल्लो णाम ॥ [ भवतु, अन्या कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम । ]

राजा—किमिति किमिति ।

विदूषकः— ( पुनस्तदेव पठति )

राजा–मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः–किं राआ बम्हदत्तो, णअरं कंपिल्लं ॥ [ किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । ]

राजा–एवमेतत् ।

विदूषकः–तेण हि मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं । राआ बह्मदत्तो, णअरं कंपिल्लं । ( इति बहुशस्तदेव पठित्वा ) इदाणिं सुणादु भवं । अयि सुत्तो अत्तभवं । अदिसीदव्वा इअं वेव्वा । अत्तणो पावरअं गण्हिअ आअमिस्सं । ( निष्क्रान्तः ) [ तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । इदानीं शृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावारकं गृहीत्वा गमिष्यामि । ]

( ततः प्रविशति वासवदत्ता आवन्तिकावेषेण चेटी च )

चेटी–एदु एदु अय्या । दिढं खु भट्टिदारिआ सीसवेदणाए दुक्खाविदा ॥ [ एत्वेत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता । ]

वासवदत्ता–हद्धि, कहिं सअणीअं रइदं पदुमावदीए ॥ [ हा धिक्, कुत्र शयनीयं रचितं पद्मावत्याः । ]

चेटी–समुद्दगिहके किल सेज्जात्थिण्णा ॥ [ समुद्रगृहके किल शय्यास्तीर्णा । ]

वासवदत्ता–तेण हि अग्गदो याहि ॥ [ तेन ह्यग्रतो याहि । ]

( उभे परिक्रामतः )

चेटी–इदं समुद्दगिहकं । पविसदु अय्या । जाव अहं वि सीसाणुलेवणं तुवारेमि । ( निष्क्रान्ता ) ॥ [ इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

वासवदत्ता– अहो अकरुणा खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि । ( प्रविश्यावलोक्य ) अहो परिजणस्स पमादो । अस्सत्थं पदुमावदिं केवलं दीवसहाअं करिअ परित्तजदि । इअं पदुमावदी ओसुत्ता । जाव उवविसामि । अहव अण्णासण-परिग्गहेण अप्पो विअ सिणेहो पडिभादि । ता इमस्सिं सय्याए उवविसामि । ( उपविश्य ) किं णु खु एदाए सह उवविसन्तीए अज्ज पहल्लादिदं विअ मे हिअअं । दिट्ठिआ अविच्छिण्ण-सुहणिस्सासा । णिव्वुत्तरोआए होदव्वं । अहव एअदेससंविभा-अदाए सअणीअस्स सूएदि मं आलिङ्गेहि त्ति । जाव सइस्सं । ( शयनं नाटयति ) ॥ [ अहो अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रमस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता । यावत् प्रविशामि । अहो परिजनस्य प्रमादः । अस्वस्था पद्मावतीं केवलं दीपसहाया कृत्वा परित्यजति । इयं पद्मावत्यवसुप्ता । यावदुपविशामि । अथवान्यासनपरिग्रहेणाल्प इव स्नेहः प्रतिभाति । तदस्यां शय्यायामुपविशामि । किं नु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम् । दिष्ट्याविच्छिन्नसुखनिःश्वासा । निवृत्तरोगया भवितव्यम् । अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छयिष्ये । ]

राजा– ( स्वप्नायते ) हा वासवदत्ते ।

वासवदत्ता– ( सहसोत्थाय ) हं अय्यउत्तो, ण हु पदुमावदी । किं णु खु दिट्ठाम्हि । महन्तो खु अय्यजोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फलो संवुत्तो ॥ [ हम् आर्यपुत्रः, न खलु पद्मावती । किं नु खलु दृष्टास्मि । महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः । ]

राजा— हा अवन्तिराजपुत्रि !

वासवदत्ता— दिट्ठिआ सिविणाअदि खु अय्यउत्तो । ण एत्थ
५७ कोवि जणो । जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि ॥
[ दिष्ट्या स्वप्नायते खल्वार्यपुत्रः । नात्र कश्चिज्जनः । यावन्मुहूर्तकं
स्थित्वा दृष्टिं हृदयं च तोषयामि । ]
६० राजा— हा प्रिये ! हा प्रियशिष्ये ! देहि मे प्रतिवचनम् ।
वासवदत्ता— आलवामि भट्टा ! आलवामि ॥ [ आलपामि भर्तः !
आलपामि । ]
६३ राजा— किं कुपितासि ।

वासवदत्ता—ण हि ण हि, दुक्खिदम्हि ॥ [ न हि न हि, दुःखितास्मि । ]
राजा— यद्यकुपिता, किमर्थं नालंकृतासि ।
६६ वासवदत्ता—इदो वरं किं ॥ [ इतः परं किम् । ]
राजा—किं विरचिकां स्मरसि ।
वासवदत्ता—( सरोषम् ) आ अवेहि, इहावि विरचिआ ॥ [ आ
६९ अपेहि, इहापि विरचिका । ]
राजा— तेन हि विरचिकार्थं भवतीं प्रसादयामि । ( हस्तौ प्रसारयति )
वासवदत्ता—चिरं ठिदम्हि । को वि मं पेक्खे । ता गमिस्सं ।
७२ अहव, सय्यापलम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ
गमिस्सं । ( तथा कृत्वा निष्क्रान्ता ) ॥ [ चिरं स्थितास्मि । कोऽपि मां
पश्येत् । तद् गमिष्यामि । अथवा, शय्याप्रलम्बितमार्यपुत्रस्य हस्तं
७५ शयनीय आरोप्य गमिष्यामि । ]
राजा—( सहसोत्थाय ) वासवदत्ते ! तिष्ठ तिष्ठ । हा धिक् ।

निष्क्रामन् संभ्रमेणाहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥ ७ ॥

( प्रविश्य )

विदूषकः–अइ पडिबुद्धो अत्तभवं ॥ [ अयि प्रतिबुद्धोऽत्रभवान् । ]

राजा–वयस्य ! प्रियमावेदये, धरते खलु वासवदत्ता ।

१ विदूषकः–अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु उवरदा वासवदत्ता ॥ [ अविधा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता । ]

६ राजा–वयस्य मा मैवं,

शय्यायामवसुप्तं मां बोधयित्वा सखे गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ८ ॥

विदूषकः–अविहा असम्भावणीअं एदं । आ ! उदअण्हाणसङ्कित्तणेण तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे ॥ [ अविधा

२ असम्भावनीयमेतद् । आः ! उदकस्नानसङ्कीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत् । ]

राजा–यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।
अथायं विभ्रमो वा स्याद् विभ्रमो ह्यस्तु मे चिरम् ॥ ९ ॥

विदूषकः–भो ! वअस्स ! एदस्सिं णअरे अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे ॥ [ भोः ! वयस्य !

२ एतस्मिन् नगरेऽवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति । सा त्वया दृष्टा भवेत् । ]

राजा–न न,

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ १० ॥

अपि च वयस्य ! पश्य पश्य,

योऽयं संत्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥ ११ ॥

---

१ असम्भावणीअं एद ण ।

विदूषकः–मा दाणि भवं अणत्थं चिन्तिअ । एदु एदु भवं । चउस्साळं पविसामो ॥ [ मेदानीं भवाननर्थं चिन्तयित्वा । एत्वेतु भवान् । चतुःशालं प्रविशावः । ]

( प्रविश्य )

काञ्चुकीयः–जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह 'एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि संनद्धानि । तदुत्तिष्ठतु भवान् । अपि च,

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।
यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥ १२ ॥'

राजा–( उत्थाय ) बाढम् । अयमिदानीम्,

उपेत्य नागेन्द्रतुरंगतीर्णे तमारुणिं दारुणकर्मदक्षम् ।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥ १३ ॥

( निष्क्रान्ताः सर्वे )

## इति पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः–क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ।

( प्रविश्य )

प्रतीहारी–अय्य ! अहं विजआ । किं करीअदु ॥ [ आर्य ! अहं विजया । किं क्रियताम् । ]

प्रतीहारी–अय्य ! इअं णिवेदेमि । एसो भट्टा सुयामुनप्पासादादो ओदरइ । ता इह एव्व णिवेदइस्सं ॥ [ आर्य ! इयं निवेदयामि
११ एष भर्ता सुयामुनप्रासादादवतरति । तदिहैव निवेदयिष्यामि । ]

काञ्चुकीयः–भवति ! तथा ।

( उभौ निष्क्रान्तौ )

मिश्रविष्कम्भकः ।

( ततः प्रविशति राजा विदूषकश्च )

राजा–

श्रुतिसुखनिनदे ! कथं नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
प्रतिभयमध्युषितास्यरण्यवासम् ॥ १ ॥

अपि च, अस्निग्धासि घोषवति ! या तपस्विन्या न स्मरसि,

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
खेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥

विदूषकः–अलं दाणि भवं अदिमत्तं सन्तप्पिअ ॥ [ अलमिदानीं भवानतिमात्रं संतप्य । ]

२ राजा–वयस्य ! मा मैवं,

चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥ ३ ॥

वसन्तक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।

विदूषकः–जं भवं आणवेदि । ( वीणां गृहीत्वा निष्क्रान्तः )

[ यद् भवानाज्ञापयति । ]

(प्रविश्य)

प्रतीहारी–जेदु भट्टा। एसो खु महासेणस्स सआसादो रब्भसगोत्तो कञ्चुईओ देवीए अङ्गारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं उवट्ठिदा ॥ [ जयतु भर्ता । एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थितौ । ]

राजा–तेन हि पद्मावती तावदाहूयताम् ।

प्रतीहारी–जं भट्टा आणवेदि । (निष्क्रान्ता) [ यद् भर्ताज्ञापयति । ]

राजा–किं नु खलु शीघ्रमिदानीमयं वृत्तान्तो महासेनेन विदितः ।

(ततः प्रविशति पद्मावती प्रतीहारी च)

प्रतीहारी–एदु एदु भट्टिदारिआ ॥ [ एत्वेतु भर्तृदारिका । ]

पद्मावती–जेदु अय्यउत्तो ॥ [ जयत्वार्यपुत्रः । ]

राजा–पद्मावति ! किं श्रुतं महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतिहारमुपस्थिताविति ।

पद्मावती–अय्यउत्त ! पिअं मे ञादिकुलस्स कुसलवुत्तन्तं सोदुं ॥ [ आर्यपुत्र । प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् । ]

राजा–अनुरूपमेतद् भवत्याभिहितं 'वासवदत्तास्वजनो मे स्वजन' इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते ।

पद्मावती–अय्यउत्त ! किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि । [ आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं द्रक्ष्यति । ]

राजा–कोऽत्र दोषः ।

पद्मावती–अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि ॥ [ आर्यपुत्रस्यापरः परिग्रह इत्युदासीनमिव भवति । ]

राजा-कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति । तस्मादास्यताम् ।

पद्मावती-जं अय्यउत्तो आणवेदि । (उपविश्य) अय्यउत्त ! तादो वा अम्बा वा किं णु खु भणिस्सदि त्ति आविग्गा विअ संवुत्ता ॥ [ यदार्यपुत्र आज्ञापयति । आर्यपुत्र ! तातो वाम्बा वा किं नु खलु भणिष्यतीत्याविग्नेव संवृत्ता । ]

राजा-पद्मावति ! एवमेतत् ।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
कन्या मयाप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महद्वाप्यं गुणोपघातं
पुत्रः पितुर्जनितरोप इवास्मि भीतः ॥ ४ ॥

पद्मावती-णं किं सक्कं रक्खिदुं पत्तकाले ॥ [ ननु किं शक्यं रक्षितुं प्राप्तकाले । ]

प्रतीहारी-एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा ॥ [ एष काञ्चुकीयो धात्री च प्रतिहारमुपस्थितौ । ]

राजा-शीघ्रं प्रवेश्यताम् ।

प्रतीहारी-जं भट्टा आणवेदि । ( निष्क्रान्ता ) [ यद् भर्ताज्ञापयति । ]

( ततः प्रविशति काञ्चुकीयो धात्री प्रतिहारी च )

काञ्चुकीयः-भोः !

संबन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।
किं नाम दैव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ ५ ॥

१. °महद्वाप्तगुणोपघातः ।

२. ण किं सक्कं etc.

प्रतीहारी–एसो भट्टा, उवसप्पदु अय्यो ॥ [ एष भर्ता, उपसर्पत्वार्यः । ]

काञ्चुकीयः– ( उपेत्य ) जयत्वार्यपुत्रः ।

३ धात्री–जेदु भट्टा ॥ [ जयतु भर्ता । ]

राजा– ( सबहुमानम् ) आर्ये !

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।
अपि राजा स कुशली मया काङ्क्षितबान्धवः ॥ ६ ॥

काञ्चुकीयः–अथ किम् । कुशली महासेनः । इहापि सर्वगतं कुशलं पृच्छति ।

३ राजा–( आसनादुत्थाय ) किमाज्ञापयति महासेनः ।

काञ्चुकीयः–सदृशमेतद् वैदेहीपुत्रस्य । नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य संदेशः ।

६ राजा–यदाज्ञापयति महासेनः । ( उपविशति )

काञ्चुकीयः–दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति । कुतः,

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥

राजा–आर्य ! सर्वमेतन्महासेनस्य प्रभावः । कुतः,

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता ।
निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥ ८ ॥

काञ्चुकीयः–एष महासेनस्य संदेशः । देव्याः संदेशमिहात्रभवती कथयिष्यति ।

३ राजा–हा अम्ब !

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।
मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥ ९ ॥

धात्री–अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि ॥ [ अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति । ]

राजा–सर्वगतं कुशलमिति । अम्ब ! ईदृशं कुशलम् ।

धात्री–मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं ॥ [ मेदानीं भर्तातिमात्रं संतप्तुम् । ]

कान्चुकीयः–धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण । अथवा,

कः कं शक्तो रक्षितुं मृत्युकाले रज्जुच्छेदे के घटं धारयन्ति ।
एवं लोकस्तुल्यधर्मो वनानां काले काले छिद्यते रुह्यते च ॥ १० ॥

राजा–आर्य ! मा मैवं,

महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ११ ॥

धात्री–आह भट्टिणी ‘ उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसा गोवालअपालआ, तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदेसेण दिण्णा अत्तणो चवलदाए अणिव्वुत्तविवाहमङ्गलो एव्व गदो । अह अ अम्हेहिं तव अ वासवदत्ताए अ पडिकिदिं चित्तफलआए आलिहिअ विवाहो णिव्वुत्तो । एसा चित्तफलआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि’ ॥ [ आह भट्टिनी ‘ उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता ।

आत्मनश्चपलतया निर्वृत्तविवाहमङ्गल एव गतः । अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः । एषा चित्रफलका तव सकाशं प्रेषिता । तां दृष्ट्वा निर्वृतो भव' ]

राजा–अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या ।

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥ १२ ॥

पद्मावती–अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि ॥ [ आर्यपुत्र ! चित्रगतं गुरुजनं दृष्ट्वाभिवादयितुमिच्छामि ]

धात्री–पेक्खदु पेक्खदु भट्टिदारिआ । ( चित्रफलकां दर्शयति ) [ पश्यतु पश्यतु भर्तृदारिका । ]

पद्मावती–( दृष्ट्वा आत्मगतम् ) हं अदिसदिसी खु इअं अय्याए आवन्तिआए । ( प्रकाशम् ) अय्यउत्त ! सदिसी खु इअं अय्याए ॥ [ हम् अतिसदृशी खल्वियमार्याया आवन्तिकायाः । आर्यपुत्र ! सदृशी खल्वियमार्यायाः । ]

राजा–न सदृशी । सैवेति मन्ये । भोः ! कष्टम्,

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ।
इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥ १३ ॥

पद्मावती–अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए सदिसी ण वेत्ति ॥ [ आर्यपुत्रस्य प्रतिकृतिं दृष्ट्वा जानामीयमार्यया सदृशी न वेति । ]

धात्री–पेक्खदु पेक्खदु भट्टिदारिआ ॥ [ पश्यतु पश्यतु भर्तृदारिका । ]

पद्मावती–( दृष्ट्वा ) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसि त्ति ॥ [ आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यया सदृशीति । ]

राजा–देवि ! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि । किमिदम् ।

पद्मावती–अय्यउत्त ! इमाए पडिकिदीए सदीसी इह एव्व पडिवसदि ॥ [ आर्यपुत्र ! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति । ]

राजा–किं वासवदत्तायाः ।

पद्मावती– आम ॥ [ आम् । ]

राजा–तेन हि शीघ्रमानीयताम् ।

पद्मावती–अय्यउत्त ! मम कण्णाभावे केणवि बम्हणेण मम भइणि अत्ति ण्णासो णिक्खित्तो । पोसिदभत्तुआ परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो ॥ [ आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका परपुरुषदर्शनं परिहरति । तदार्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः । ]

राजा–

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।
परस्परगता लोके दृश्यते रूपतुल्यता ॥ १४ ॥

( प्रविश्य )

प्रतीहारी–जेदु भट्टा । एसो उज्जइणीओ बम्हणो, भट्टिणीए हत्थे मम भइणिअत्ति ण्णासो णिक्खित्तो, तं पडिग्गहिदुं पडिहारं उपट्ठिदो ॥ [ जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतीहारमुपस्थितः । ]

राजा–पद्मावति ! किं नु स ब्राह्मणः ।

पद्मावती–होदव्वं ॥ [ भवितव्यम् । ]

राजा–शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः ।

प्रतीहारी–जं भट्टा आणवेदि । ( निष्क्रान्ता ) ॥ [ यद् भर्ताज्ञापयति । ]

राजा—पद्मावति ! त्वमपि तामानय ।

पद्मावती—जं अय्यउत्तो आणवेदि । ( निष्क्रान्ता ) ॥ [ यदार्यपुत्र आज्ञापयति । ]

( ततः प्रविशति यौगन्धरायणः प्रतीहारी च )

यौगन्धरायण.— भो. ! ( आत्मगतम् )

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थे
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥ १५ ॥

प्रतीहारी-एसो भट्टा । उपसप्पदु अय्यो ॥ [ एष भर्ता । उपसर्पत्वार्यः । ]

यौगन्धरायण — ( उपसृत्य ) जयतु भवान् , जयतु ।

राजा-श्रुतपूर्व इव स्वरः । भो ब्राह्मण ! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ।

यौगन्धरायणः-अथ किम् ।

राजा-तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका ।

प्रतीहारी-जं भट्टा आणवेदि । ( निष्क्रान्ता ) ॥ [ यद् भर्ताज्ञापयति । ]

( तत प्रविशति पद्मावती आवन्तिका प्रतीहारी च )

पद्मावती-एदु एदु अय्या । पिअं दे णिवेदेमि ॥ [ एत्वेत्वार्या । प्रियं ते निवेदयामि । ]

आवन्तिका- किम् ॥ [ किं किम् । ]

पद्मावती-भादा दे आअदो ॥ [ भ्राता ते आगतः । ]

आवन्तिका-दिट्ठिआ इदाणिं पि सुमरदि ॥ [ दिष्टयेदानीमपि स्मरति । ]

पद्मावती-( उपसृत्य ) जेदु अय्यउत्तो । एसो णासो ॥ [ जय-

त्वार्यपुत्रः । एष न्यासः । ]

राजा-निर्यातय पद्मावति ! अथवा[1] साक्षिमन्न्यासो निर्यातयितव्यः । इहात्रभवान् रैभ्यः, अत्रभवती चाधिकरणं भविष्यतः ।

पद्मावती- अय्य ! णीअदां दाणिं अय्या ॥ [ आर्य ! नीयतामिदानीमार्या । ]

धात्री- ( आवन्तिकां निर्वर्ण्य ) अम्मो ! भट्टिदारिआ वासवदत्ता ॥ [ अम्मो ! भर्तृदारिका वासवदत्ता । ]

राजा- कथं महासेनपुत्री । देवि ! प्रविश त्वमभ्यन्तरं पद्मावत्या सह ।

यौगन्धरायणः- न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

राजा-किं भवानाह । महासेनपुत्री खल्वेषा ।

यौगन्धरायणः-भो राजन् ।

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥

राजा-भवतु, पश्यामस्तावद् रूपसादृश्यम् । संक्षिप्यतां यवनिका ।

यौगन्धरायणः-जयतु स्वामी ।

वासवदत्ता-जेदु अय्यउत्तो ॥ [ जयत्वार्यपुत्रः । ]

राजा- अये ! असौ यौगन्धरायणः, इयं महासेनपुत्री ।

किं नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया ।
अनयाप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥ १७ ॥

यौगन्धरायणः-स्वामिन् ! देव्यपनयेन कृतापराधः खल्वहम् । तत् क्षन्तुमर्हति स्वामी । ( इति पादयोः पतति )

राजा- ( उत्थाप्य ) यौगन्धरायणो भवान् ननु ।

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥ १८ ॥

---

१ अथवा is dropped in some Mss.

यौगन्धरायणः- स्वामिभाग्यानामनुगन्तारो वयम् ।

पद्मावती- अम्महे अय्या खु इअं । अय्ये ! सहीजणसमुदाआरेण अजाणन्तीए अदिक्कन्दो समुदाआरो । ता सीसेण पसादेमि । [ अहो आर्या खल्वियम् । आर्ये ! सखीजनसमुदाचारेणाजानन्त्यातिक्रान्तः समुदाचारः, तच्छीर्षेण प्रसादयामि । ]

वासवदत्ता- ( पद्मावतीमुत्थाप्य ) उट्ठेहि उट्ठेहि अविहवे ! उट्ठेहि ! अत्थिसअं णाम सरीरं अवरज्झइ ॥ [ उत्तिष्ठोत्तिष्ठाविधवे ! उत्तिष्ठ ! अर्थित्वं नाम शरीरमपराध्यति । ]

पद्मावती- अणुग्गहिदम्हि ॥ [ अनुगृहीतास्मि । ]

राजा-वयस्य यौगन्धरायण ! देव्यपनये का कृता ते बुद्धिः ।

यौगन्धरायणः-कौशाम्बीमात्रं परिपालयामीति ।

राजा-अथ पद्मावत्या हस्ते किं न्यासकारणम् ।

यौगन्धरायणः-पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति ।

राजा-इदमपि रुमण्वता ज्ञातम् ।

यौगन्धरायणः- स्वामिन् ! सर्वैरेव ज्ञातम् ।

राजा-अहो शठः खलु रुमण्वान् ।

यौगन्धरायणः-स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च ।

राजा-न, न । सर्वे एव वयं यास्यामो देव्या पद्मावत्या सह ।

यौगन्धरायण.- यदाज्ञापयति स्वामी ।

( भरतवाक्यम् )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ १९ ॥

( निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः ।

इति स्वप्नवासवदत्तमवसितम् ।

## पद्यानां सूचिः ।

# प्रतिज्ञायौगन्धरायणस्य कथावस्तु ।

अथ कदाचिन्मृगयाव्यसनी वत्सराजो वेणुवनागवनं प्रयातः सन् प्रद्योतेन तत्रोपन्यस्तं वनगजप्रच्छादितशरीरं कपटहस्तिनं परमार्थगजं मत्वा वीणयैनं वशीकर्तुं यावदारमते तावत् सहसा कपटहस्त्यधिष्ठातृभिः प्रद्योतस्य योधैः स परिवार्य बहुप्रहारनिपातिताश्वस्तत्कालं मोहं गतः कर्कशाभिर्लताभिः प्राकृत इव शरीरयन्त्रणात् प्रधर्षितः । ततो वत्सराजेन प्रथमं कृतप्रहारजनितमोहः सालंकायनो नाम प्रद्योतस्यामात्यः शरीरयन्त्रणादुन्मुच्यैनं स्कन्धवाहनभारोप्योज्जयिनीं नीत्वा प्रद्योताय समर्पितवान् । प्रद्योतश्च स्वकन्यां वासवदत्तां गान्धर्वासक्तां ज्ञात्वा वत्सराजाद्गृहीतं घोषवतीं नाम वीणारत्नं तस्यै दत्वा तमन्तःपुरेऽवरोध । तत्र चान्योन्यदर्शनेन समुत्पन्नाभिलाषौ वासवदत्तावत्सराजौ प्रच्छन्नं गान्धर्वेण विधिना निर्वृत्तविवाहौ सुखमनुभवन्तौ स्थितौ । अथ यौगन्धरायणः स्वस्वामिनः परकृतच्छलनं चारमुखाच्छ्रुत्वा तत्र च बन्धनेऽपि स्वामिनमवन्तिराजतनयाविवशीकृतहृदयं ज्ञात्वा विषण्णः स्वस्वामिनो घोषवत्याश्च वासवदत्तया सह प्रत्यानयनं प्रतिजज्ञे । ततः स उन्मत्तसदृशं वेषं धृत्वा गूढाकारैः स्वपुरुषैः सान्तःपुरां सर्वामुज्जयिनीं व्याप्याबभूव । अथ च काले सर्वान् स्वपुरुषान् युद्धाय सन्नाह्य दत्तसमयानुशेषेण स्वामिनि वासवदत्ताद्वितीये करेणुं भद्रवतीमधिरुह्योज्जयिन्या निष्क्रान्ते शत्रुभिर्युध्यमान एव गृहीतो यौगन्धरायणः । गुणानुरागिणा प्रद्योतेन तु पूर्वाभिप्रेतजामातृलाभप्रीतेन सत्कृत्य कौशाम्बीं प्रेषितः ।

## पात्राणि ।

पुरुषाः—

यौगन्धरायणः—उदयनस्य मन्त्री । उन्मत्तकश्चायमेव ।

श्रमणकः—तद्वेष उदयनस्य मन्त्री रुमण्वान् ।

विदूषकः—उदयनस्य नर्मसुहृद् वसन्तकः ।

ब्राह्मणः—प्रच्छन्नो यौगन्धरायणस्य पुरुषः ।

हंसकः—उदयनसमीपवर्ती कश्चिदुपाध्यायः ।

गात्रसेवकः—यौगन्धरायणस्य पुरुषो वासवदत्तागृहे प्रच्छन्नो हस्तिपकः ।

सालकः—यौगन्धरायणस्य पुरुषः ।

निर्मुण्डकः—यौगन्धरायणगृहे प्रतीहारः ।

महासेनः—अवन्तिराजो वासवदत्ताजनकः प्रद्योतो नाम ।

भरतरोहकः—महासेनमन्त्री ।

बादरायणः—महासेनस्य काञ्चुकीयः ।

भटः—वासवदत्ताया भृत्यः ।

साधारणौ—भरतरोहकस्य पुरुषौ ।

स्त्रियः—

देवी—अङ्गारवती नाम महासेनस्य महिषी ।

विजया—यौगन्धरायणगृहे प्रतीहारी ।

॥ श्रीः ॥

भासनाटकचक्रे

# प्रतिज्ञायौगन्धरायणम्

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः-पातु वासवदत्तायो महासेनोऽतिवीर्यवान् ।
वत्सराजस्तु नाम्ना सशक्तियौगन्धरायणः ॥ १ ॥

( परिक्रम्य नेपथ्याभिमुखमवलोक्य ) आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी-अय्य ! इअम्हि । [ आर्य ! इयमस्मि । ]

सूत्रधार-आर्ये ! गीयतां तावत् किञ्चिद् वस्तु । ततस्तव गीतप्रसादिते रङ्गे वयमपि प्रकरणमारभामहे । आर्ये ! किमिदं चिन्त्यते । ननु गीयते ।

नटी-अज्ज मए सिविणे ञ्ञादिकुलस्स अस्सत्थं विअ दिट्ठं । ता इच्छामि अय्येण कुसलविण्णाणणिमित्तं कञ्चि पुरुसं पेसिदुं[1] । [ अद्य मया स्वप्ने ज्ञातिकुलस्यास्वास्थ्यमिव दृष्टम् । तदिच्छाम्यार्येण कुशलविज्ञाननिमित्तं कञ्चित् पुरुषं प्रेषयितुम् । ]

सूत्रधारः-बाढम् ।

पुरुषं प्रेषयिष्यामि व्यसनात्मगहिते क्षमम् ।

( नेपथ्ये )

सालक ! मजासयम् ।

सूत्रधारः-पुरुषं प्रेषयत्येष यथा यौगन्धरायणः ॥ २ ॥

( निष्क्रान्तौ । )

स्थापना ।

---

१ पेविग्दुं.

( ततः प्रविशति यौगन्धरायणः सालकेन सह । )

यौगन्धरायणः—सालक ! सज्जस्त्वम् ।

सालकः—अय्य ! अह इं । [ आर्य अथ किम् । ]

यौगन्धरायणः—महान् खल्वध्वा गन्तव्यः ।

सालकः—महत्तरेण सिणेहेण अय्यं उवचिट्ठामि । [ महत्तरेण स्नेहेनार्यमुपतिष्ठे । ]

यौगन्धरायणः—हन्त धारयति बलवान्, यस्य सौहार्दम् । कुतः,

स्निग्धेष्वासज्यं कर्म यद् दुष्करं स्याद्
यो वा विज्ञाता सत्कृतानां गुणानाम् ।
[1]श्रीतं सामर्थ्यं यस्य तस्य क्रमेण
दैवप्रामाण्याद् भ्रश्यते वर्धते वा ॥ ३ ॥

अथ वेणुवनात्[2] त्रिपु नागवनं श्वः प्रयाता स्वामी प्रागेव सम्भावयितव्यः ।

सालकः—अय्य ! लेहो खु मं ओवज्झइ[3], जहिं आअत्तं कय्यसरीरं । [ आर्य ! लेखः खलु मामपवहति, यस्मिन् आयत्तं कार्यशरीरम् । ]

यौगन्धरायणः—विजये !

( प्रविश्य )

विजया—अय्य इअम्हि । [ आर्य ! इयमस्मि । ]

यौगन्धरायणः—विजये ! त्वर्यतां लेखः प्रविसरः च ।

विजया—अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

यौगन्धरायणः—अथ दृष्टपूर्वस्त्वयैव पन्थाः ।

सालकः—णहि, सुदपुरुवो । [ नहि, श्रुतपूर्वः । ]

यौगन्धरायणः—एतदपि मेधाविलक्षणम् । भोः ! वनगजप्रच्छादितशरीरं नीलहस्तिनमुपन्यस्य प्रद्योतः स्वामिनं छलयितुकाम इति

१ अतीतं. २ वेणुवनाश्रितेषु गहनेषु. ३ ओवज्झइ.

प्रवृत्तिरुपगता नः । अपीदानीं स्वामिनो बुद्धयतिक्रमो न स्यात् । अहो तु खलु वत्सराजभीरुत्वं प्रद्योतस्य । व्यक्तीकृतमसामर्थ्यमक्षौहिण्याः । कुतः,

व्यक्तं बलं बहु च तस्य न चैककार्यं
संख्यातवीरपुरुषं च न चानुरक्तम् ।
व्याजं ततः समभिनन्दति युद्धकाले
सर्वं हि सैन्यमनुरागमृते कलत्रम् ॥ ४ ॥

( प्रविश्य )

विजया-लेहो खु अज्ज । पडिसरा सव्ववहूजणहत्थादो तुवारीअदित्ति भट्टिमादा आह । [ लेखः खल्वार्य । प्रतिसरा सर्ववधूजनहस्तात् त्वर्यत इति भर्तृमाता आह । ]

यौगन्धरायणः-विजये ! विज्ञाप्यतां तत्रभवत्यै—सर्ववधूजनहस्तप्रयुक्ता वा एका वा प्रतिसरा दीयतामिति ।

विजया-अज्ज ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

( प्रविश्य )

निर्मुण्डकः-सुहं अय्यस्स । [ सुखमार्यस्य । ]

यौगन्धरायणः-कथं निर्मुण्डकः ।

निर्मुण्डकः-अय्य ! एसो भट्टिपादमूल्यादो ओवट्ठिदो हंसओ आअदो । [ आर्य । एष भर्तृपादमूलादोपस्थितिको हंसकः आगतः । ]

यौगन्धरायणः-कथं हंसक एकः प्राप्त इति । सालक ! विश्रम्यतामिदानीं मुहूर्तम् । त्वरिततरं वा यास्यसि सविश्रमो वा ।

सालकः-अय्य ! तह । ( निष्क्रान्तः । ) [ आर्य ! तथा । ]

यौगन्धरायणः-निर्मुण्डक ! प्रवेश्यतां हंसकः ।

निर्मुण्डकः-अय्य ! तह । ( निष्क्रान्तः । ) [ आर्य ! तथा । ]

---

१ अनुरागहृते. २. त्वरितं.

यौगन्धरायणः—स्वामिनाविरहितपूर्वो हंसक एकः प्राप्त इति साविग्नमिव मे मनः । कुतः,

यथा नरस्याकुलबान्धवस्य गत्वान्यदेशं गृहमागतस्य ।
तथा हि मे सम्प्रति बुद्धिशङ्का श्रोष्यामि किन्नु प्रियमप्रियं वा ॥५॥

( ततः प्रविशति हंसको निर्मुण्डकश्च । )

निर्मुण्डकः—एदु एदु अय्यो । [ एत्वेत्वार्यः । ]

हंसकः—कहिं कहिं अय्यो । [ कुत्र कुत्रार्यः । ]

निर्मुण्डकः—एसो अय्यो चिट्ठइ, उवसप्पदु णं । ( निष्क्रान्तः । ) [ एष आर्यस्तिष्ठति उपसर्पत्वेनम् । ]

हंसकः—( उपसृत्य[1] ) सुहं अय्यस्स । [ सुखमार्यस्य । ]

यौगन्धरायणः—हंसक ! न खलु गतः स्वामी नागवनम् ।

हंसकः—अय्य ! हिज्जो एव्व गदो भट्टा । [ आर्य ! ह्य एव गतो भर्ता । ]

यौगन्धरायणः—हन्त निष्फलमनुप्रेषणम् । छलिताः स्मः । अथास्ति प्रत्याशा, अथवा अद्यैव प्राणा मोक्तव्याः ।

हंसकः—धरदि खु दाव भट्टा । [ धरते खलु तावद् भर्ता । ]

यौगन्धरायणः—धरते तावदित्यनूर्जिता विपत्तिरभिहिता । गृहीतेन स्वामिना भवितव्यं ननु ।

हंसकः—सुट्ठु अय्येण विण्णादं । गहीदो भट्टा । [ सुष्ठु आर्येण विज्ञातम् । गृहीतो भर्ता । ]

यौगन्धरायणः—कथं गृहीतः स्वामी । हन्त भोः ! महान् खलु भारः प्रद्योतस्य भाग्यैर्निस्तीर्णः । अद्यप्रभृति वत्सराजसचिवानां प्रतिष्ठितमसामर्थ्यमयशश्च । इदानीमनुत्पन्नकार्यपण्डितो रुमण्वान् क्व गतः । इदानीमध्यारोहणीयं क्व गतम् । कुतः,

---

१ ( उपगम्य । )

स्निग्धं च सौहृदहृतं च कुलोद्गतं च
व्यायामयोग्यपुरुषं च गुणार्जितं च ।
क्रीतं परैर्गहनदुर्गतया प्रनष्टं
युद्धे समस्तमतिभारतया विपन्नम् ॥ ६ ॥

हंसकः–जइ समग्गजोहवलपरिवारो भवे भट्टा, ण एसो दोसो भवे । [ यदि समग्रयोधबलपरिवारो भवेद् भर्ता, नैष दोषो भवेत् । ]

यौगन्धरायणः–कथमसमग्रयोधबलपरिवारो नाम स्वामी ।

हंसकः–सुणादु अय्यो । [ शृणोत्वार्यः । ]

यौगन्धरायणः–अध्वश्रान्तो भवान् । आस्यताम् ।

हंसकः–अय्य ! तह । ( उपविश्य ) सुणादु अय्यो । सावसेसपच्चूसाए रअणीए वाहणसुहाए वेळाए वालुआतित्थेण णइं णम्मदं तरिअ वेणुवणे कळत्तं आवासिअ छत्तमत्तपरिच्छदेण गजजूहविमद्दजोग्गेण बलेण मग्गमद्दअणीए वीहीए णाअवणं पआदो भट्टा । [ आर्य ! तथा । शृणोत्वार्यः । सावशेषप्रत्यूषाया रजन्या वाहनसुखाया वेलाया वालुकातीर्थेन नदीं नर्मदां तीर्त्वा वेणुवने कलत्रमावास्य छत्रमात्रपरिच्छदेन गजयूथविमर्दयोग्येन बलेन मार्गमर्दन्या वीथ्या नागवनं प्रयातो भर्ता । ]

यौगन्धरायणः–ततस्ततः ।

हंसकः–तदो इसुक्खेवमत्तोत्थिदे सुय्ये एत्तिअमत्ताणि विअ जोअणाणि गच्छिअ कोसमत्तेण विअ मदअंधीरपव्वदं अणासादिअ तडाअपङ्कुक्खित्तं अद्धणिम्मिदसिळाकम्मं विअ विसमदंसणं दिट्ठं णो णाअजूहं । [ तत इषुक्षेपमात्रोत्थिते सूर्ये एतावन्मात्राणीव योजनानि गत्वा क्रोशमात्रेणेव मदगन्धीरपर्वतमनासाद्य तटाकपङ्कोत्क्षिप्तमर्धनिर्मितशिलाकर्मेव विषमदर्शनं दृष्टं नो नागयूथम् । ]

१ मिअमदअण्डीए. मग्गमदगन्धिए.

यौगन्धरायणः—ततस्ततः ।

हंसकः—तदो णिज्झाअन्तीसु सेणासु समुप्पण्णसङ्कापिण्डिदे तस्सिं जूहे इमस्स अणत्थस्स उप्पादओ कोवि पदादी भट्टारं एव्व उव ट्ठिदो । [ ततो निध्यायन्तीषु सेनासु समुत्पन्नशङ्कापिण्डिते तस्मिन् यूथेऽस्यानर्थस्योत्पादकः कश्चित् पदातिः भर्तारमेवोपस्थितः । ]

यौगन्धरायणः—तिष्ठ । इतः क्रोशमात्रे मल्लिकासालप्रच्छादितशरीरो नखदन्तवर्जमेकनीलो हस्ती मया दृश्यत इत्युक्तवान् ननु ।

हंसकः—कहं परिण्णादं खु एदं अय्येण । जागत्ति खु समुप्पण्णो अअं दोसो । [ कथं परिज्ञातं खल्वेतदार्येण । जागर्ति खलु समुत्पन्नोऽयं दोषः । ]

यौगन्धरायणः—हंसक ! जाग्रतोऽपि बलवत्तरः कृतान्तः । ततस्ततः ।

हंसकः—तदो सुवण्णसदप्पदाणेण तं णिसंसं पडिपूजिअ भट्टिणा उत्तं—अत्थि एसो चक्कवट्टी हत्थी णीळकुवळअतणू णाम हत्थिसिक्खाए पठिदो । ता अप्पमत्ता होह तुम्हे इमस्सिं जूहे । गअं तं अहं वीणादुदीओ आणेमि त्ति । [ ततः सुवर्णशतप्रदानेन तं नृशंसं प्रतिपूज्य भर्त्रोक्तम्—अस्त्येष चक्रवर्ती हस्ती नीलकुवलयतनुर्नाम हस्तिशिक्षाया पठितः । तद् अप्रमत्ता भवत यूयमस्मिन् यूथे । गजं तमहं वीणाद्वितीय आनयामीति । ]

यौगन्धरायणः—अथ कथमुपेक्षितस्तदानीं स्वामी रुमण्वता ।

हंसकः—णहि णहि । पसादिअ भट्टा अमच्चेण विण्णाविदो—णहु दे एव्वावणादीणं वि दिसागआणं गहणं ण सम्भावणीअं । अविदु दुरारक्खदाए आसण्णदोसाणि विसअन्तराणि । तहिं णिल्लज्जो णिरमिजणो पच्चन्तवासी जणो । ता पदादिमत्ताहिट्ठिदं इमं जूहं करिअ सव्व एव्व गच्छामो, ण एकाइणा सामिणा गन्तव्वं त्ति ।

१ पीडिदे.

[ नहि नहि । प्रसाद्य भर्तामात्येन विज्ञापितः— न खलु ते ऐरावणादीनामपि दिग्गजानां ग्रहणं न सम्भावनीयम् । अपितु दुरारक्षतयासन्नदोषाणि विषयान्तराणि । तत्र निर्लज्जो निरभिजनः प्रत्यन्तवासी जनः । तत् पदातिमात्राधिष्ठितमिदं यूयं कृत्वा सर्व एव गच्छामः, नैकाकिना स्वामिना गन्तव्यमिति । ]

यौगन्धरायणः—अपि महाजनसमक्षमेवमुक्तः स्वामी रुमण्वता । एवमप्यवक्तव्यां स्वामिभक्तिमिच्छामि । ततस्ततः ।

हंसकः—तदो अत्तजीविदणिद्दिट्ठेण सवहेण णिवारिअ अमच्चं णीलवल्लाहआदो हत्थिणो ओदरिअ सुन्दरपाडलं णाम अस्सं आलुहिअ अणद्धागए सुय्ये विंसदिमत्तेहिं पदादिहिं सह पआदो भट्टा । [ तत आत्मजीवितनिर्दिष्टेन शपथेन निवार्यामात्यं नीलबलाहकाद् हस्तिनोऽवतीर्य सुन्दरपाटलं नामाश्वमारुह्यानर्धागते सूर्ये विंशतिमात्रैः पदातिभिः सह प्रयातो भर्ता । ]

यौगन्धरायणः—विजयाय । हा धिक्, स्नेहात् पूर्ववृत्तान्तो नावेक्षितः । ततस्ततः ।

हंसकः—तदो दिउणं विअ अद्धाणं गच्छिअ सालरुक्खच्छाआए सवण्णणट्ठणीलदाए परुब्भासिदेहिं असरीरणिणिक्खित्तेहिं विअ दन्तजुअलेहिं सूइदो धणुसदमत्तेण विअ दिट्ठो सो दिव्ववारणपडिच्छन्दो । [ ततो द्विगुणमिवाध्वानं गत्वा सालवृक्षच्छायाया सावर्ण्यनष्टनीलतया प्रोद्भासिताभ्यामशरीरविनिक्षिप्ताभ्यामिव दन्तयुगलाभ्यां सूचितो धनुःशतमात्रेणेव दृष्टः स दिव्यवारणप्रतिच्छन्दः । ]

यौगन्धरायणः—हंसक ! अस्मत्परिताप इत्युच्यताम् । ततस्ततः ।

हंसकः—तदो भट्टिणा ओदरिअ अस्सादो आअमिअ देवदाणं पणामं करिअ गहीदा वीणा । तदो पिट्ठदो एक्ककिदणिग्घओ विअ मद्दन्तो कण्ठीरवो समुप्पण्णो । [ ततो भर्त्रावतीर्याश्वादागम्य देवताना

प्रणामं कृत्वा गृहीता वीणा । ततः पृष्ठत एककृतनिश्चय इव महान्
कण्ठीरवः समुत्पन्नः । ]

७२ यौगन्धरायणः–कण्ठीरव इति । ततस्ततः ।

हंसकः–तदो कण्ठीरवपरिञ्ञाणणिमित्तं परिवुत्ता अ वअं।
महामत्तोत्तराउहीआहिट्ठिदो पच्चुग्गदो सो किदअहत्थी [ ततः
७५ कण्ठीरवपरिज्ञाननिमित्तं परिवृत्ताश्च वयम् । महामात्रोत्तरायुधीयाधिष्ठितः
प्रत्युद्गतः स कृतकहस्ती । ]

यौगन्धरायणः–ततस्ततः ।

७८ हंसकः–तदो णामगोत्तग्गहणेण समस्सासिअ कुलवुत्तजणं सव्वहा
पज्जोदप्पओओ एसो, अणुगच्छह मं, अहं दाणिं परस्स उवण्णासं
विसमारम्भं परक्कमेण समीकरोमि त्ति भणिअ भट्टा पविट्ठो एव्व तं
८१ परबलं । [ ततो नामगोत्रग्रहणेन समाश्वास्य कुलपुत्रजनं सर्वथा प्रद्योत-
प्रयोग एषः, अनुगच्छत माम्, अहमिदानीं विषमारम्भं परस्योपन्यासं
पराक्रमेण समीकरोमीति भणित्वा भर्ता प्रविष्ट एव तत् परबलम् । ]

८४ यौगन्धरायणः–प्रविष्ट इति । अथवा ननु स्थाने,

व्रीडितो वञ्चनां प्राप्य मानी सत्त्वमुपाश्रितः ।
शूरश्चैकायनस्थश्च किमन्यत् प्रतिपद्यते ॥ ७ ॥

ततस्ततः ।

हंसकः–तदो कीळाअमाणो विअ अत्तच्छन्दाणुवत्तिणा सुन्दर-
३ पाडळेण अस्सेण अत्ताभिप्पाआदो वि अहिअं पहरन्तो अदिबहु-
कदाए परबलस्स अदिप्पडज्जमाणवाआमो विसण्णणट्ठसव्वपरि-
जणो मए एक्काइणा, णहि णहि, भट्टिणा एव्व रक्खिअमाणो
६ अणुबद्धदिवससुद्धपरिस्सन्तो बहुप्पहारणिपडिअतुरओ तम्माअ-
माणसुय्यदारुणाए वेळाए मोहं गदो भट्टा । [ ततः क्रीडन्निवात्म-
च्छन्दानुवर्तिना सुन्दरपाटलेनाश्वेनात्माभिप्रायादप्यधिकं प्रहरन् अति-

बहुकृतया परबलस्यातिप्रयुज्यमानव्यायामो विपन्नसर्वपरिजनो मयैकाकिना, नहि नहि, मयैव रक्ष्यमाणोऽनुबद्धदिवसयुद्धपरिश्रान्तो बहुप्रहारनिपतिततुरगस्ताम्यत्सूर्यदारुणायां वेलायां मोहं गतो भर्ता। ]

यौगन्धरायण.— कथं मोहमुपगतः स्वामी। ततस्ततः।

हंसकः—तदो जहासत्ति सण्णिहिदगहणुप्पाडिदाहि अविण्णाअमाणजादीहि कक्कसाहि लदाहि पाकिदो विअ सरीरअन्तणादो पहरिसिदो भट्टा। [ ततो यथाशक्ति सन्निहितगहनोत्पाटिताभिरविज्ञायमानजातिभिः कर्कशाभिर्लताभिः प्राकृत इव शरीरयन्त्रणात् प्रधर्षितो भर्ता। ]

यौगन्धरायणः—कथं प्रधर्षितः स्वामी।

पीनांसस्य विकृष्टपर्वमहतो नागेन्द्रहस्ताकृते-
श्चापास्फालिकरस्य दूरभरणाद् धाणाधिकारोपिणः।
विप्राभ्यर्चयितुः श्रमेषु सुहृदां सत्कर्तुरालिङ्गने-
र्न्यस्तं तस्य भुजद्वयस्य वलयस्थानान्तरे बन्धनम् ॥ ८॥

अथ कस्यां वेलायां प्रत्यागतप्राणः स्वामी।

हंसकः—अय्य! अवसिदावळेवेसु पावेसु। [ आर्य! अवसितावलेपेषु पापेषु। ]

यौगन्धरायणः— दिष्ट्या शरीरं धर्षितं, न तेजः। ततस्ततः।

हंसकः—ततो पच्चाअदप्पाणं दाणि भट्टारं पेक्खिअ अणेण मम भादा हदो अणेण मम पिदा अणेण मम सुदो मम वअस्सो त्ति अब्भहा भट्टिणो परक्कमं वण्णअन्ता सव्वदो अभिद्दुदा दे पावा। [ ततः प्रत्यागतप्राणमिदानीं भर्तारं प्रेक्ष्यानेन मम भ्राता हतोऽनेन मम पितानेन मम सुतो मम वयस्य इति अन्यथा भर्तुः पराक्रमं वर्णयन्तः सर्वतोऽभिद्रुतास्ते पापाः। ]

यौगन्धरायणः—ततस्ततः।

---

१ दूरहरणात्.

हंसकः–अण्णं च दाणि अच्चरिअं । अण्णोण्णाणुणएण तहिं एक्को ववसिदो अकय्यं कत्तुं । सो दक्खिणाहिमुहं परिवत्तिअ भट्टारं समरवाआमसंखोहिदाणि णिरुवआरं संखिविअ केसाणि पीडिअ करेण करवालं पहारवेगं उप्पादइदुकामो आधावन्तो– [ अन्यच्चेदानीमाश्चर्यम् । अन्योन्यानुनयेन तत्रैको व्यवसितोऽकार्यं कर्तुम् । स दक्षिणाभिमुखं परिवर्त्य भर्तारं समरव्यायामसंक्षोभितान् निरुपचारं संक्षिप्य केशान् पीडयित्वा करेण करवालं प्रहारवेगमुत्पादयितुकाम आधावन्– ]

यौगन्धरायणः–हंसक ! वृत्तान्तं तावदाधारय, यावदहमुच्छ्वसामि

हंसकः–तदो रुहिरपडलपिच्छिलाए भूमीए सो णिसंसओ सएण वेएण ओघट्टिदचलणो पडिहदारम्भो हदो पडिदो । [ ततो रुधिरपटलपिच्छिलायां भूमौ स नृशंसः स्वेन वेगेनावघट्टितचरणः प्रतिहतारम्भो हतः पतितः । ]

यौगन्धरायणः–पतितः पाप एषः । भोः !

परचक्रैरनाक्रान्ता धर्मसङ्करवर्जिता ।
भूमिर्भर्तारमापन्नं रक्षिता परिरक्षति ॥ ९ ॥

हंसकः–तदो भट्टिणा पुढमं कुन्तप्पहारजणिदमोहो साळङ्कासणो णाम पज्जोदस्स अमच्चो 'मा खु मा खु साहसं'त्ति भणिअ तं देसं उवट्ठिदो । [ ततो भर्त्रा प्रथमं कुन्तप्रहारजनितमोहः शालङ्कायनो नाम प्रद्योतस्यामात्यो 'मा खलु मा खलु साहसमि'ति भणित्वा तं देशमुपस्थितः । ]

यौगन्धरायणः–ततस्ततः ।

हंसकः–तदो तक्काळदुल्लहं पणामं करिअ सरीरअन्तणादो तेण मोइदो भट्टा [ ततस्तत्कालदुर्लभं प्रणामं कृत्वा शरीरयन्त्रणात् तेन मोचितो भर्ता । ]

१ अच्चाहिदं, २ तावदवधारय,

यौगन्धरायणः—विमुक्तः स्वामी । साधु भोः शालङ्कायन ! साधु ! अवस्था खलु नाम शत्रुमपि सुहृत्त्वे कल्पयति । हंसक ! व्यसनात् किञ्चिदुच्छ्वसितमिव मे मनः । अथ किं प्रतिपन्नं तेन साधुना ।

हंसकः—तदो तेण अय्येण अणेअं सोवआरं सन्तिवअणं भणिअ गाढप्पहुप्पहारदाए असमत्थो वाहणासणत्ति खन्धसअणं आरोविअ उज्जइणिं एव्व णीदो भट्टा । [ ततस्तेनार्येणानेकं सोपचारं शान्तिवचनं भणित्वा गाढबहुप्रहारतयासमर्थो वाहनासन इति स्कन्धशयनमारोप्योज्जयिनीमेव नीतो भर्ता । ]

यौगन्धरायणः—नीतः स्वामी । एष सोऽनर्थः,

एतत् तन्न्यङ्गमस्माकमेष सोऽतिमनोरथः ।
प्रद्योतस्य मनस्वित्वात् स्वामी दुःखेषु वर्तते ॥ १० ॥

अथ,

कथमगणितपूर्वं द्रक्ष्यते तं नरेन्द्रः
कथमपुरुषवाक्यं श्रोष्यते सिद्धवाक्यः ।
कथमविषयवन्ध्यं धारयिष्यत्यमर्षं
प्रणिपतति निरुद्धः सत्कृतो धर्षितो वा ॥ ११ ॥

( प्रविश्य )

प्रतीहारी— अय्य ! एसा पडिसरा । [ आर्य ! इयं प्रतिसरा । ]

२ यौगन्धरायणः—

एतानि तान्यपतितानि काले भाग्यक्षयान्निष्फलमुद्यतानि ।
तुरङ्गमस्येव रणे निवृत्ते नीराजनाकौतुकमङ्गलानि ॥ १२ ॥

प्रतीहारी— अय्य ! इमा पडिसरा । [ आर्य ! एषा प्रतिसरा । ]

यौगन्धरायणः— विजये ! स्थाप्यताम् ।

३ प्रतीहारी— किं त्ति भट्टिमादरं णिवेदेमि । [ किमिति भर्तृमातरं निवेदयामि । ]

---

१ बन्धसअण.

यौगन्धरायणः–विजये ! एवमेतत् ।

प्रतीहारी–किं एदं । [ किमेतत् । ]

यौगन्धरायणः–इदम् ।

प्रतीहारी–भणादु भणादु अय्यो भणादु । [ भणतु भणत्वार्यो भणतु । ]

यौगन्धरायणः–अथवा नैतच्छक्यं परिहर्तुम् । निवेदयिष्याम्यत्रभवत्यै । विजये ! स्थिरीक्रियतामात्मा । ( कर्णे ) एवमिव ।

प्रतीहारी–हा ।

यौगन्धरायणः–विजया खल्वसि ।

प्रतीहारी–एसा गच्छामि मन्दभाआ । [ एषा गच्छामि मन्दभागा । ]

यौगन्धरायणः–विजये ! न खलु त्वयात्रभवत्यै गृहीतः स्वामीति सहसा निवेदयितव्यम् । स्नेहदुर्बलं मातृहृदयं रक्ष्यम्

प्रतीहारी–कहं दाणि णिवेदेमि । [ कथमिदानीं निवेदयामि । ]

यौगन्धरायणः–शृणु ।

पूर्वं तावद् युद्धसम्बद्धदोषाः प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे रूढे शोके कार्यतत्त्वं निवेद्यम् ॥१३॥

प्रतीहारी–घत्तिस्सं । ( निष्क्रान्ता । ) [ ग्रहीष्यामि । ]

यौगन्धरायणः–हंसक ! त्वमिदानीं स्वामिना किं न गतः ।

हंसकः–अय्य ! ववसिदो खु अहं अत्ताणं अणुग्गहिदुं साळङ्काअणेण णिउत्तो–गच्छ इमं वुत्तन्तं कोसम्बीए णिवेदेहि त्ति । [ आर्य ! व्यवसितः खल्वहमात्मानमनुग्रहीतुं सालङ्कायनेन नियुक्तः––गच्छेमं वृत्तान्तं कौशाम्ब्या निवेदयेति । ]

यौगन्धरायणः–किन्नु खल्विदानीं निराशमनुसारं कर्तुकामः, उताहो स्निग्धपुरुषसन्निकर्षं परिहरति ।

हंसकः–अह इं । [ अथ किम् । ]

---

१ हं. २ निरागम.

यौगन्धरायणः—स स्वकं विस्मयादात्मानमाविष्करोति, उत सर्वारम्भसिद्धौ रमणीयं भवति । अथ मामन्तरेण स्वामी न किञ्चिदाह ।

१२ हंसकः—अय्य ! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तजलावगाढाए दिट्ठीए बहुकं सदद्दुकामेण विअ म्हि भट्टिणा उत्तो—गच्छ जोअन्ध—( इत्यर्धोक्ते तिष्ठति । ) [ आर्य ! अस्ति, प्रदक्षिणीकुर्वन्

१५ भर्तारमन्तर्जलावगाढया दृष्ट्या बहुक सन्देष्टुकामेनेवास्मि भर्त्रोक्तः—गच्छ यौगन्ध— ]

यौगन्धरायणः—स्वैरमभिधीयतां, स्वामिवाक्यमेतत् ।

१८ हंसकः—जोअन्धराअणं पेक्खेहि त्ति । [ यौगन्धरायण प्रेक्षस्वेति। ]

यौगन्धरायणः—मा तावत् । सर्वसचिवमण्डलमतिक्रम्यैको यौगन्धरायणो द्रष्टव्य इत्याह ।

२१ हंसकः—अह इं । [ अथ किम् । ]

यौगन्धरायणः—तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी ।

२४ हंसकः—बाढं । [ बाढम् । ]

यौगन्धरायणः—पुरुषान्तरितं मां द्रक्ष्यति स्वामी,

रिपुनृपनगरे वा बन्धने वा वने वा
सगुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम् ।
जितमिति कृतबुद्धिं वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम् ॥ १४ ॥

( नेपथ्ये )

हा हा भट्टा ! [ हा हा भर्तः ! ]

३ यौगन्धरायणः—

---

१ स्वय.

सज्जलकः-मदनिके ! प्रीतोऽस्मि ।

गणिका-भोदु, अब्भन्तरं पविसिअ उववसामि । ( तथा करोति । ) [ भवत्वभ्यन्तरं प्रविश्योपविशामि । ]

चेटी-सज्जलअ ! आअच्छ, कामदेवउले मं पडिवालेहि । अहं ओसरं जाणिअ अज्जुआए णिवेदेमि । [ सज्जलक ! आगच्छ, कामदेवकुले मां प्रतिपालय । अहमवसरं ज्ञात्वाज्जुकायै निवेदयामि । ]

सज्जलकः-बाढम् । ( निष्क्रान्तः । )

( ततः प्रविशत्यपरा चेटी । )

चेटी-सुहं अज्जुआए । एसो सत्थवाहपुत्तस्स सआसादो कोच्चि बम्हणो आअदो अज्जुअं पेक्खिदुं । [ सुखमज्जुकायाः । एष सार्थवाहपुत्रस्य सकाशात् कश्चिद् ब्राह्मण आगतोऽज्जुकां द्रष्टुम् । ]

गणिका-( सादरम् ) गच्छ, सिग्घं पवेसेहि णं । [ गच्छ, शीघ्रं प्रवेशयैनम् । ]

चेटी-तह । ( उपसृत्य ) एदु एदु अय्यो । [ तथा । एत्वेत्वार्यः । ]

( प्रविश्य )

विदूषकः-( सर्वतो विलोक्य ) अहो गणिआवाडस्स सस्सिरीअदा । णाणापट्टणसमागदेहिं आअमिएहिं पुत्थआ वाईअन्ति । सओजअन्ति अ आहारप्पआराणि । वीणा वादीअन्ति । सुवण्णआरा अलङ्कारप्पआराणि आदरेण जोजअन्ति । [ अहो गणिकावाटस्य सश्रीकता । नानापट्टणसमागतैरागमिकैः पुस्तकानि वाच्यन्ते । संयोज्यन्ते चाहारप्रकाराः । वीणा वाद्यन्ते । सुवर्णकारा अलङ्कारप्रकारानादरेण योजयन्ति । ]

चेटी-एसा अज्जुआ । उवसप्पदु अय्यो । [ एषाज्जुका । उपसर्पत्वार्यः । ]

विदूषकः-( उपगम्य ) सोत्थि होदीए । [ स्वस्ति भवत्यै । ]

गणिका–साअदं अय्यस्स । हञ्जे ! आसणं अय्यस्स, पादोदअं च । [ स्वागतमार्यस्य । हञ्जे ! आसनमार्यस्य, पादोदकं च । ]

विदूषकः–( आत्मगतम् ) सव्वं आणेदु वज्जिअ भोअणं । [ सर्वमानयतु वर्जयित्वा भोजनम् । ]

चेटी–जं अज्जुआ आणवेदि । ( आसनं ददाति पादोदकं च । ) उवविसदु अय्यो । [ यदज्जुकाज्ञापयति । उपविशत्वार्यः । ]

विदूषकः–( उपविश्य ) पडिच्छदु आसणं भोदी । अहं किञ्चि भणिदुं आअदो । [ प्रतीच्छत्वासनं भवती । अहं किञ्चिद् भणितुमागतः । ]

गणिका–( उपविश्य ) अवहिदम्हि । [ अवहितास्मि । ]

विदूषकः–केत्तिअमत्तं खु तस्स अलङ्कारस्स मुल्लप्पमाणं ? [ कियन्मात्रं खलु तस्यालङ्कारस्य मूल्यप्रमाणम् । ]

गणिका–किंणिमित्तं खु अय्यो पुच्छदि । [ किंनिमित्तं खल्वार्यः पृच्छति । ]

विदूषकः–सुणादु भोदी । तत्तहोदो चारुदत्तस्स गुणप्पआअणणिमित्तं खु तुए अलङ्कारो तहिं णिक्खित्तो । सो तेण जूदे हारिदो । [ शृणोतु भवति । तत्रभवतश्चारुदत्तस्य गुणप्रत्यायननिमित्तं खलु त्वयालङ्कारस्तस्मिन् निक्षिप्तः । स तेन द्यूते हारितः । ]

गणिका–जूदे । जुज्जइ । तदो तदो । [ द्यूते । युज्यते । ततस्ततः । ]

विदूषकः– तदो तस्स अलङ्कारस्स मुल्लभूदं इमं मुत्तावळिं पडिच्छदु भोदी । [ ततस्तस्यालङ्कारस्य मूल्यभूतामिमां मुक्तावलीं प्रतीच्छतु भवती । ]

गणिका–( आत्मगतम् ) धिक् खु गणिआभावं । लुद्धत्ति मं तुळअदि । जइ ण पडिच्छे, सो एव्व दोसो भविस्सदि । ( प्रकाशम् )

मदनिका— एसा अज्जुआ । उवसप्पदु अय्यो । [ एषाज्जुका । उपसर्पत्वार्यः । ]

सज्जलकः— ( उपसृत्य ) सुखं भवत्यै ।

गणिका— साअदं अय्यस्स । हञ्जे ! आसणं देदु अय्यस्स । [ स्वागतमार्यस्य । हञ्जे ! आसनं दीयतामार्याय । ]

सज्जलकः— भवतु भवतु । गृहीतमासनम् । त्वरिततरमनुष्ठेयं किञ्चित् कार्यमस्ति ।

गणिका— एवं भणादु अय्यो । [ एवं, भणत्वार्यः । ]

सज्जलकः— आर्यचारुदत्तेनास्मि प्रेषितः—यस्तावदलङ्कारो मम हस्ते निक्षिप्तः, स स्वसंभोगमलिनतया गृहस्यासान्निध्यान् कौटुम्बिकानां दुरारक्षः । तद् गृह्यताम् इति ।

गणिका— इमं तस्स चारुदत्तस्स देदु अय्यो । [ इमं तस्मै चारुदत्ताय ददात्वार्यः । ]

सज्जलकः— भवति ! न खल्वहं गच्छामि ।

गणिका— अहं जाणामि तस्स गेहे साहसं करिअ आणीदो अअं अलङ्कारो । तस्स गुणाणि अणुकम्पेदु अय्यो । [ अहं जानामि तस्य गेहे साहसं कृत्वानीतोऽयमलङ्कारः । तस्य गुणाननुकम्पतामार्यः । ]

सज्जलकः— ( आत्मगतम् ) कथं विदितोऽस्म्यनया ।

गणिका— को एत्थ, पवहणं दाव अय्यस्स । [ कोऽत्र, प्रवहणं तावदार्यस्य । ]

मदनिका— णेमिसद्दो विअ सुणीअदि । आअदेण पवहणेण होदव्वं [ नेमिशब्द इव श्रूयते । आगतेन प्रवहणेन भवितव्यम् । ]

गणिका— ( स्वैराभरणैर्मदनिकामलङ्कृत्य ) आरुहदु अय्यो अय्याए सह पवहणं । [ आरोहत्वार्य आर्यया सह प्रवहणम् । ]

मदनिका— अज्जुए ! किं एदं । [ अज्जुके ! किमेतत् ]

गणिका-मा खु मा खु एवं मन्तिअ । अय्या खु सि दाणिं संवुत्ता । गण्हदु अय्यो । ( मदनिकां गृहीत्वा सज्जलकाय प्रयच्छति । ) [ मा खलु मा खल्वेव मन्त्रयित्वा । आर्या खल्वसीदानीं संवृत्ता । गृह्णात्वार्यः । ]

सज्जलकः-( आत्मगतम् ) भोः ! कदा खल्वस्याः प्रतिकर्तव्यं भविष्यति । अथवा, शान्तं शान्तं पापम् ।

नरः प्रत्युपकारार्थी विपत्तौ लभते फलम् ।
द्विषतामेव कालोऽस्तु योऽस्या भवतु तस्य वा ॥ ७ ॥

( तया सह निष्क्रान्तः सज्जलकः । )

गणिका-चउरिए ! [ चतुरिके ! ]

( प्रविश्य )

चेटी- अज्जुए ! इअम्हि । [ अज्जुके ! इयमस्मि । ]

गणिका-हञ्जे । पेक्ख जागरन्तीए मए सिविणो दिट्ठो एवं । [ हञ्जे ! पश्य जाग्रत्या मया स्वप्नो दृष्टः एवम् । ]

चेटी- पिअं मे, अमुदंकणाडअं संवुत्तं । [ प्रियं मे, अमृताङ्कनाटकं संवृत्तम् । ]

गणिका-एहि इमं अलङ्कारं गण्हिअ अय्यचारुदत्तं अभिसरिस्सामो । [ एहीममलंकारं गृहीत्वार्यचारुदत्तमभिसरिष्याव. ।

चेटी-अज्जुए ! तह । एदं पुण अभिसारिआसहाअभूदं दुद्दिणं उण्णमिदं । [ अज्जुके । तथा । एतत् पुनरभिसारिकासहायभूतं दुर्दिनमुन्नमितम् ।

गणिका-हदासे ! मा हु वड्ढावेहि । हताशे ! मा खलु वर्धय । ]

चेटी-एदु एदु अज्जुआ । [ एत्वेत्वज्जुका । ]

( निष्क्रान्ते । )

चतुर्थोऽङ्कः ।

# चारुदत्तस्य श्लोकानुक्रमणिका ।



## प्रतिमायाः कथावस्तु ।

अत्र कथावस्तु प्रायः सर्वं रामायणाद् गृहीतम् । तत्र प्रथमं श्रीरामस्याभिषेके प्रवृत्ते सति राज्ञः कर्णे मन्थरया किमप्यभिहितम् । ततश्च विच्छिन्नोऽभिषेकः । रामश्च कैकेयीवचनाद् राज्ञा निर्वासितः । ततः पुत्रशोकाद् राजा दशरथो विपन्नः । अथ मातुलगृहनिवासात् प्रतिनिवृत्तो भरतः प्रतिमागृहे पितामहादिप्रतिमाभिः सह स्थापितां दशरथस्य प्रतिमां दृष्ट्वा विदितपितृव्यापत्तिः कैकेयीं निर्भर्त्सयाञ्चक्रे । स्वयं च सुमन्त्रसहितो रामं द्रष्टुमरण्यं गत्वा तस्मात् तत्पादुके गृहीत्वाभिषेकजलं तयोरेवावर्जयितुमभ्यनुज्ञामादाय नगरं प्रत्याजगाम । तत्र चारण्यवासमनुभवति रामे मायाभिक्षुणा रावणेन सीतापहृता । रामभ्यवपत्तुमागतो जटायुर्हतो रावणेन । सुमन्त्रनिवेदितसीतापहारो भरतो रामसाहाय्यार्थं लङ्कां गन्तुं विनिश्चिकाय । ततो वानरसहायो लङ्केश्वरं निहत्य सीतामादाय रामः पुनरप्याश्रमं प्राप्त इति उदन्तमुपलभ्य मातृभिः सह सप्रकृतिको भरतस्तत्रैव रामं प्रत्युद्गतः । तदनन्तरं भरतात् प्रतिगृहीतराज्यो रामो राज्येऽभिषिषिचे ।

## पात्राणि ।

पुरुषाः—

राजा—दशरथः कोसलाधिपः ।

रामः<br>लक्ष्मणः<br>भरतः<br>शत्रुघ्नः } —दशरथस्य पुत्राः ।

सुमन्त्रः—दशरथस्य सारथिः ।

रावणः—राक्षसाधिपः परिव्राजकवेषः ।

काञ्चुकीयः

सूतः

देवकुलिकः--प्रतिमागृहरक्षकः ।

भटः

सुधाकारः

वृद्धतापसौ

तापसः

नन्दिलकः

स्त्रियः--

सीता---रामस्य पत्नी ।

कौसल्या
सुमित्रा
कैकेयी
} ---राममातरः ।

अवदातिका---चेटी सीतायाः ।

विजया---प्रतीहारी ।

नन्दिनिका---चेटी ।

तापसी

# प्रतिमा ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः ।

सीताभवः पातु सुमन्त्रतुष्टः
सुग्रीवरामः सहलक्ष्मणश्च ।
यो रावणार्यप्रतिमश्च देव्या
विभीषणात्मा भरतोऽनुसर्गम् ॥ १ ॥

( नेपथ्याभिमुखमवलोक्य । )

आर्ये, इतस्तावत् ।

३ ( प्रविश्य । )

नटी—अय्य इअम्हि । [ आर्य, इयमस्मि । ]

सूत्रधारः—आर्ये, इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत् ।

६ नटी—अय्य, तह । ( गायति । ) [ आर्य, तथा । ]

सूत्रधारः—अस्मिन् हि काले

चरन्ति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा ।

( नेपथ्ये )

अय्य, अय्य । [ आर्य, आर्य । ]

३ ( आकर्ण्य । )

सूत्रधारः—भवतु विज्ञातम्

मुदिता नरेन्द्रभवने त्वरिता प्रतिहाररक्षीव ॥ २ ॥

( निष्क्रान्तौ । )

स्थापना ।

( प्रविश्य । )

प्रतिहारी–अय्य को इह कञ्चुईआणं संणिहिदो । [ आर्य क इह काञ्चुकीयानां संनिहितः । ]

( प्रविश्य । )

काञ्चुकीयः–भवति, अयमस्मि । किं क्रियताम् ।

प्रतिहारी–अय्य ! महाराओ देवासुरसङ्गामेसु अप्पडिहदमारहो दसरहो आणवेदि–सिग्घं भट्टिदारअस्स रामस्स रज्जप्पहावसञ्जोअकारआ अहिसेअसम्भारा आणीअन्तु त्ति । [ आर्य, महाराजो देवासुरसङ्ग्रामेष्वप्रतिहतमहारथो दशरथ आज्ञापयति । शीघ्रं भर्तृदारकस्य रामस्य राज्यप्रभावसंयोगकारका अभिषेकसंभारा आनीयन्तामिति । ]

काञ्चुकीयः–भवति, यद्यदाज्ञप्तं महाराजेन, तत् सर्वमुपस्थापितम् । पश्य ।

छत्रं सव्यजनं सनन्दिपटहं भद्रासनं कल्पितं
न्यस्ता हेममयाः सदर्भकुसुमास्तीर्थाम्बुपूर्णा घटाः ।
युक्तः पुष्यरथश्च मन्त्रिसहिताः पौराः समभ्यागताः
सर्वस्यास्य हि मङ्गलं स भगवान् वेद्यां वसिष्ठः स्थितः ॥ ३ ॥

प्रतिहारी–जइ एव्वं, सोहणं किदं । [ यद्येवं, शोभनं कृतम् । ]

काञ्चुकीयः–हन्त भोः

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः ।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥ ४ ॥

प्रतिहारी–तुवरदु तुवरदु दाणिं अय्यो । [ त्वरतां त्वरतामिदानीमार्यः । ]

काञ्चुकीयः–भवति ! इदं त्वर्यते ।

( निष्क्रान्तः । )

प्रतिहारी-( परिक्रम्यावलोक्य ) अय्य ! संभवअ ! संभवअ ! गच्छ तुवं पि महाराअवअणेण अय्यपुरोहिदं जहोपआरेण तुवारेहि । ( अन्यतो गत्वा । ) सारसिए ! सारसिए ! सङ्गीदयालं गच्छिअ नाडईआण विण्णवेहि-कालसवादिणा णाडएण सज्जा होह त्ति । जाव अहं वि सव्वं किदं त्ति महाराअस्स णिवेदेमि । ( निष्क्रान्ता । ) [ आर्य ! संभवक ! संभवक ! गच्छ, त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारेण त्वरय । सारसिके ! सारसिके ! सङ्गीतशालां गत्वा नाटकीयानां विज्ञापय-कालसवादिना नाटकेन सज्जा भवतेति । यावदहमपि सर्वं कृतमिति महाराजाय निवेदयामि । ]

( ततः प्रविशत्यवदातिका वल्कलं गृहीत्वा । )

अवदातिका-अहो अच्चाहिदं । परिहासेण वि इमं वक्कलं उवणअन्तीए मम एत्तिअं भअं आसी, किं पुण लोभेण परधणं हरन्तस्स । हसिदुं विअ इच्छामि । ण खु एआइणीए हसिदव्वं । [ अहो अत्याहितम् । परिहासेनापीमं वल्कलमुपनयन्त्या ममैतावद् भयमासीत्, किं पुनर्लोभेन परधनं हरतः । हसितुमिवेच्छामि । न खल्वेकाकिन्या हसितव्यम् । ]

( ततः प्रविशति सीता सपरिवारा )

सीता-हञ्जे, ओदादिआ परिसङ्किदवण्णा विअ दिस्सइ । किं णु हु णिअ एदं । [ हञ्जे, अवदातिका परिशङ्कितवर्णेव दृश्यते । किन्नु खल्विदमेतत् । ]

चेटी-भट्टिणि ! सुलहावराहो परिअणो णाम । अवरज्झा भविस्सदि । [ भट्टिनि ! सुलभापराधः परिजनो नाम । अपराद्धा भविष्यति । ]

*सीता*–णहि णहि । हसिदुं विअ इच्छदि । [ नहि नहि, हसितुमिवेच्छति । ]

अवदातिका–( उपसृत्य । ) जेदु भट्टिणी ! भट्टिणि ण खु अहं अवरज्झा । [ जयतु भट्टिनी ! भट्टिनि न खल्वहमपराद्धा । ]

सीता–का तुमं पुच्छदि । ओदादिए ! किं एदं वामहत्थपरिग्गहिदं । [ का त्वां पृच्छति । अवदातिके ! किमेतद् वामहस्तपरिगृहीतम् । ]

अवदातिका–भट्टिणि ! इदं वक्कलं । [ भट्टिनि ! इदं वल्कलम् । ]

सीता–वक्कलं किस्स आणीदं । [ वल्कलं कस्मादानीतम् । ]

अवदातिका–सुणादु भट्टिणी । णेवच्छपालिणी अय्यरेवा णिव्वुत्तरङ्गप्पओअणं असोअरुक्खस्स एक्कं किसलअं अम्हेहि जाइदा आसि । ण अ ताए दिण्णं । तदो अरिहदि अवराहो त्ति इदं गहिदं । [ शृणोतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा निवृत्तरङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्माभिर्याचितासीत् । न च तया दत्तम् । ततोऽर्हत्यपराध इतीदं गृहीतम् । ]

सीता–पावअं किदं । गच्छ, णिय्यादेहि । [ पापकं कृतम् । गच्छ, निर्यातय । ]

अवदातिका–भट्टिणि ! परिहासणिमित्तं खु मए एदं आणीदं । [ भट्टिनि ! परिहासनिमित्तं खलु मयैतदानीतम् । ]

सीता–उम्मत्तिए ! एवं दोसो वड्ढइ । गच्छ णिय्यादेहि, णिय्यादेहि । [ उन्मत्तिके ! एवं दोषो वर्धते । गच्छ, निर्यातय, निर्यातय । ]

अवदातिका–जं भट्टिणी आणवेदि । ( प्रस्थातुमिच्छति । ) [ यद् भट्टिन्याज्ञापयति । ]

सीता–हला ! एहि दाव । [ हला ! एहि तावत् । ]

अवदातिका–भट्टिणि ! इअम्हि । [ भट्टिनि ! इयमस्मि । ]

सीता—हला ! कि णु हु मम वि दाव सोहदि । [ हला ! किन्तु खलु ममापि तावच्छोभते । ]

अवदातिका—भट्टिणि ! सव्वसोवणीअं सुरूवं णाम । अलङ्करोदु भट्टिणी [ भट्टिनि ! सर्वशोभनीयं सुरूपं नाम । अलङ्करोतु भट्टिनी । ]

सीता—आणेहि दाव । ( गृहीत्वालङ्कृत्य । ) हला ! पेक्ख, किं दाणिं सोहदि । [ आनय तावत् । हला ! पश्य, किमिदानीं शोभते । ]

अवदातिका—तव खु सोहदि णाम । सोवण्णिअं विअ वक्कलं संवुत्तं । [ तव खलु शोभते नाम । सौवर्णिकमिव वल्कलं संवृत्तम् । ]

सीता—हञ्जे ! तुवं किञ्चि ण भणासि । [ हञ्जे ! त्वं किञ्चिन्न भणसि । ]

चेटी—णत्थि वाआए पओअणं । इमे पहरिसिदा तणूरुहा मन्तेन्ति । ( पुलकं दर्शयति । ) [ नास्ति वाचा प्रयोजनम् । इमानि प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते । ]

सीता—हञ्जे आदंसअं दाव आणेहि ! [ हञ्जे ! आदर्शं तावदानय । ]

चेटी—जं भट्टिणी आणवेदि । ( निष्क्रम्य प्रविश्य । ) भट्टिणि ! अअं आदंसओ । [ यद् भट्टिन्याज्ञापयति । भट्टिनि ! अयमादर्शः । ]

सीता—( चेटीमुखं विलोक्य ) चिट्ठदु दाव आदंसओ । तुवं किं वि वत्तुकामा विअ । [ तिष्ठतु तावदादर्शः । त्वं किमपि वक्तुकामेव । ]

चेटी—भट्टिणि, एवं मए सुदं । अय्यबालाइ कञ्चुई भणादि अहिसेओ अहिसेओ त्ति । [ भट्टिनि ! एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति—अभिषेकोऽभिषेक इति । ]

( प्रविश्यापरा )

चेटी—भट्टिणि ! पिअक्खाणिअं पिअक्खाणिअं । [ भट्टिनि, प्रियाख्यानिकं प्रियाख्यानिकम् । ]

सीता—किं किं पडिच्छिअ मन्तेसि । [ किं किं प्रतीष्य मन्त्रयसे । ]

चेटी–भट्टिदारओ किल अहिसिञ्चीअदि । [ भर्तृदारकः किलाभिषिच्यते । ]

सीता–अवि तादो कुसली । [ अपि तातः कुशली । ]

चेटी–महाराएण एव्व अहिसिञ्चीअदि । [ महाराजेनैवाभिषिच्यते । ]

सीता–जइ एवं, दुदीअं मे पिअं सुदं । विसालदरं उच्छङ्गं करेहि । [ यद्येवं, द्वितीयं मे प्रियं श्रुतम् । विशालतरमुत्सङ्गं कुरु । ]

चेटी–भट्टिणि ! तह । ( तथा करोति । ) [ भट्टिनि ! तथा । ]

( सीता आभरणान्यवमुच्य ददाति । )

चेटी–भट्टिणि ! पटहसद्दो विअ । [ भट्टिनि ! पटहशब्द इव । ]

सीता–सो एव्व । [ स एव । ]

चेटी–एक्कपदे ओघट्टीअ तुह्णीओ पटहसद्दो संवुत्तो । [ एकपदे अवघट्य तूष्णीकः पटहशब्दः संवृत्तः । ]

सीता–को णु खु उग्घादो अहिसेअस्स । अहव बहुवुत्तन्ताणि राअउलाणि णाम । [ को नु खलूद्घातोऽभिषेकस्य । अथवा बहुवृत्तान्तानि राजकुलानि नाम । ]

चेटी–भट्टिणि, एवं मए सुदं–भट्टिदारअं अहिसिञ्चिअ महाराओ वणं गमिस्सदि त्ति । [ भट्टिनि ! एवं मया श्रुतं–भर्तृदारकमभिषिच्य महाराजो वनं गमिष्यतीति । ]

सीता–जइ एव्वं, ण सो अहिसेओदओ, मुहोदअं णाम । [ यद्येवं, न तदभिषेकोदकं, मुखोदकं नाम । ]

( ततः प्रविशति रामः । )

रामः–हन्त भोः !

आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
स्कन्धोच्चारणनम्यमानवदनप्रच्योतितोये घटे ।

राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो ! विस्मयः ॥५॥

विश्रम्यतामिदानीं पुत्रेति स्वयं राज्ञा विसर्जितस्यापनीतभारोच्छ्वसितमिव मे मनः । दिष्ट्या स एवास्मि रामः महाराज एव महाराजः । यावदिदानीं मैथिलीं पश्यामि ।

अवदातिका–भट्टिणि ! भट्टिदारओ खु आअच्छइ । णावणीदं वक्कलं । [ भट्टिनि ! भर्तृदारकः खल्वागच्छति । नापनीत वल्कलम् । ]

रामः–मैथिलि ! किमास्यते ।

सीता–हं अय्यउत्तो । जेदु अय्यउत्तो । [ हं आर्यपुत्रः । जयत्वार्यपुत्रः । ]

रामः–मैथिलि ! आस्यताम् । ( उपविशति । )

सीता–जं अय्यउत्तो आणवेदि । ( उपविशति । ) [ यद् आर्यपुत्र आज्ञापयति । ]

अवदातिका–भट्टिणि ! सो एव्व भट्टिदारअस्स वेसो । अलिअं विअ एदं भवे । [ भट्टिनि ! स एव भर्तृदारकस्य वेषः । अलीकमिवेदं भवेत् । ]

सीता–तादिसो जणो अलिअं ण मन्तेदि । अहव बहुवुत्तन्ताणि राअउलाणि णाम । [ तादृशो जनोऽलीकं न मन्त्रयते । अथवा बहुवृत्तान्तानि राजकुलानि नाम । ]

रामः–मैथिलि ! किमिदं कथ्यते ।

सीता–ण खु किञ्चि । इअं दारिआ भणादि–अहिसेओ अहिसेओ त्ति । [ न खलु किंचित् । इयं दारिका भणति–अभिषेकोऽभिषेक इति । ]

रामः–अवगच्छामि ते कौतूहलम् । अस्त्यभिषेकः । श्रूयताम् । अद्यास्मि महाराजेनोपाध्यायामात्यप्रकृतिजनसमक्षमेकप्रकारसंक्षिप्तं

कोसलराज्यं कृत्वा बाल्याभ्यस्तमङ्कमारोप्य मातृगोत्रं स्निग्धमाभाष्य पुत्र ! राम ! प्रतिगृह्यतां राज्यमित्युक्तः ।

सीता–तदाणीं अय्यउत्तेण किं भणिदं । [ तदानीमार्यपुत्रेण किं भणितम् । ]

रामः–मैथिलि ! त्वं तावत् किं तर्कयसि ।

सीता–तक्केमि अय्यउत्तेण अभणिअ किञ्चि दिग्घं णिस्ससिअ महाराअस्स पादमूलेसु पडिअं त्ति । [ तर्कयाम्यार्यपुत्रेणाभणित्वा किञ्चिद् दीर्घं निःश्वस्य महाराजस्य पादमूलयोः पतितमिति । ]

रामः–सुष्ठु तर्कितम् । अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते । तत्र हि पादयोरस्मि पतितः ।

समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥ ६ ॥

सीता–तदो तदो । [ ततस्ततः । ]

रामः–ततोऽप्रतिगृह्यमाणेष्वनुनयेषु आसन्नजरादोषैः स्वैः प्राणैरस्मि शापितः ।

सीता– तदो तदो । [ ततस्ततः । ]

रामः–ततस्तदानीं,

शत्रुघ्नलक्ष्मणगृहीतघटेऽभिषेके
छत्रे स्वयं नृपतिना रुदता गृहीते ।
सम्भ्रान्तया किमपि मन्थरया च कर्णे
राज्ञः शनैरभिहितं च न चास्मि राजा ॥ ७ ॥

सीता– पिअं मे । महाराओ एव्व महाराओ, अय्यउत्तो एव्व अय्यउत्तो । [ प्रियं मे । महाराज एव महाराजः, आर्यपुत्र एवार्यपुत्रः । ]

राम – मैथिलि, किमर्थं निमुक्तालङ्कारासि ।

सीता  ण खु दाव, आवज्झामि । [ न तावद्, आबध्नामि । ]

६ राम – न खलु । प्रत्यग्रावतारितैर्भूषणैर्भवितव्यम् । तथाहि—

कर्णौ त्वरापहृतभूषणभुग्नपाशौ
 संस्रसिताभरणगौरतलौ च हस्तौ ।
एतानि चाभरणभारनतानि गात्रे
 स्थानानि नैव समतामुपयान्ति तावत् ॥ ८ ॥

सीता– पारेदि अय्यउत्तो अलिअं पि सच्चं विअ मन्तेदुं । [ पारयत्यार्यपुत्रोऽलीकमपि सत्यमिव मन्त्रयितुम् । ]

३ राम –तेन हि अलङ्क्रियताम् । अहमादर्शं धारयिष्ये । ( तथा कृत्वा निवण्य । ) तिष्ठ ।

आदर्शे वल्कलानीव किमेते सूर्यरश्मयः ।
हसितेन परिज्ञाता क्रीडेयं नियमस्पृहा ॥ ९ ॥

अवदातिके, किमेतत् ।

अवदातिका-भट्टा ! किण्णु हु सोहदि ण सोहदित्ति कोदूहलेण

३ आबद्धा । [ भर्तः ! किंनु खलु शोभते न शोभत इति कौतूहलेनाबद्धानि । ]

राम -मैथिलि ! किमिदम् । इक्ष्वाकूणां वृद्धालङ्कारस्त्वया धार्यते । अस्त्यस्माकं प्रीतिः । आनय ।

६ सीता– मा खु मा खु अय्यउत्तो अमङ्गलं भणादु । [ मा खलु मा खल्वार्यपुत्रोऽमङ्गलं भणतु । ]

राम –मैथिलि, किमर्थं वारयसि ।

९ सीता–उज्झिदाहिसेअस्स अय्यउत्तस्स अमङ्गलं विअ मे पडिआदि । [ उज्झिताभिषेकस्यार्यपुत्रस्यामङ्गलमिव मे प्रतिभाति । ]

रामः–

मा स्वयं मन्युमुत्पाद्य परिहासे विशेषतः।
शरीरार्धेन मे पूर्वमाबद्धा हि यदा त्वया ॥ १० ॥

( नेपथ्ये )

हा हा महाराजः।

३ सीता– अय्यउत्त ! किं एदं । [ आर्यपुत्र, किमेतत् । ]

रामः– ( आकर्ण्य । )

नारीणां पुरुषाणां च निर्मर्यादो यदा ध्वनिः।
सुव्यक्तं प्रभवामीति मूले दैवेन ताडितम् ॥ ११ ॥

तूर्णं ज्ञायतां शब्दः।

( प्रविश्य )

३ काञ्चुकीयः– परित्रायतां परित्रायतां कुमारः।

रामः– आर्य ! कः परित्रातव्यः।

काञ्चुकीयः– महाराजः।

६ रामः– महाराज इति । आर्य ! ननु वक्तव्यम्, एकशरीरसंश्रिता पृथिवी रक्षितव्येति । अथ कुत उत्पन्नोऽयं दोषः।

काञ्चुकीयः– स्वजनात्।

९ रामः– स्वजनादिति । हन्त नास्ति प्रतीकारः।

शरीरेऽरिः प्रहरति हृदये स्वजनस्तथा।
कस्य स्वजनशब्दो मे लज्जामुत्पादयिष्यति ॥ १२ ॥

काञ्चुकीयः– तत्रभवत्याः कैकेय्याः।

रामः– किमम्बायाः । तेन हि उदर्केण गुणेनात्र भवितव्यम्।

३ काञ्चुकीयः– कथमिव।

रामः–श्रूयतां,

यस्याः शक्रसमो भर्ता मया पुत्रवती च या ।
फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति ॥ १३ ॥

काञ्चुकीयः–कुमार ! अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् । तस्या एव खलु वचनाद् भवदभिषेको निवृत्तः ।

२ रामः–आर्य, गुणाः खल्वत्र ।

काञ्चुकीयः–कथमिव ।

रामः–श्रूयतां,

वनगमननिवृत्तिः पार्थिवस्यैव ताव-
न्मम पितृपरवत्ता बालभावः स एव ।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मथ च न परिभोगैर्वञ्चिता भ्रातरो मे ॥ १४ ॥

काञ्चुकीयः–अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्य इत्युक्तम् । अत्राप्यलोभः ।

३ रामः–आर्य ! भवान् खल्वस्मत्पक्षपातादेव नार्थमवेक्षते । कुतः,

शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥ १५ ॥

काञ्चुकीयः–अथ–

रामः–अतः परं न मातुः परिवादं श्रोतुमिच्छामि । महाराजस्य
३ वृत्तान्तस्तावदभिधीयताम् ।

काञ्चुकीयः–ततस्तदानीं,

शोकादवचनाद् राज्ञा हस्तेनैव विसर्जितः ।
किमप्यभिमतं मन्ये मोहं च नृपतिर्गतः ॥ १६ ॥

रामः–कथं मोहमुपगतः ।

( नेपथ्ये )

३ कथं कथं मोहमुपगत इति ।

यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दयाम्

रामः–( आकर्ण्य पुरतो विलोक्य । )

अक्षोभ्यः क्षोभितः केन लक्ष्मणो धैर्यसागरः ।
येन रुष्टेन पश्यामि शताकीर्णमिवाग्रतः ॥ १७ ॥

( ततः प्रविशति धनुर्बाणपाणिर्लक्ष्मणः । )

लक्ष्मणः– ( सक्रोधम् । ) कथं कथं मोहमुपगत इति ।

यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दयां
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते ।
अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं लोकं कर्तुं यतश्छलिता वयम् ॥ १८ ॥

सीता–अय्यउत्त ! रोदिदव्वे काले सोमित्तिणा धणू गहीदं अपुव्वो खु से आआसो । [ आर्यपुत्र ! रोदितव्ये काले सौमित्रिणा
२ धनुर्गृहीतम् । अपूर्वः खल्वस्यायासः । ]

रामः–सुमित्रामातः ! किमिदम् ।

लक्ष्मणः–कथं कथं किमिदं नाम ।

क्रमप्राप्ते हृते राज्ये भुवि शोच्यासने नृपे ।
इदानीमपि सन्देहः किं क्षमा निर्मनस्विता ॥ १९ ॥

रामः–सुमित्रामातः ! अस्मद्राज्यभ्रंशो भवत उद्योगं जनयति । आः, अपण्डितः खलु भवान् ।

भरतो वा भवेद् राजा वयं वा ननु तत् समम् ।
यदि तेऽस्ति धनुःश्लाघा स राजा परिपाल्यताम् ॥ २० ॥

लक्ष्मणः-न शक्नोमि रोषं धारयितुम् । भवतु भवतु । गच्छामस्तावत् ( प्रस्थितः । )

३ रामः-

त्रैलोक्यं दग्धुकामेव ललाटपुटसंस्थिता ।
भ्रुकुटिर्लक्ष्मणस्यैषा नियतीव व्यवस्थिता ॥ २१ ॥

सुमित्रामातः ! इतस्तावत् ।

लक्ष्मणः-आर्य ! अयमस्मि ।

३ रामः-भवतः स्थैर्यमुत्पादयता मयैवमभिहितम् । उच्यतामिदानीम् ।

ताते धनुर्नमयि सत्यमवेक्षमाणे
मुञ्चानि मातरि शरं स्वधनं हरन्त्याम् ।
दोषेषु बाह्यमनुजं भरतं हनानि
किं रोषणाय रुचिरं त्रिषु पातकेषु ॥ २२ ॥

लक्ष्मणः-( सबाष्पम् । ) हा धिक् । अस्मानविज्ञायोपालभसे ।

यत्कृते महति क्लेशे राज्ये मे न मनोरथः ।
वर्षाणि किल वस्तव्यं चतुर्दश वने त्वया ॥ २३ ॥

रामः-अत्र मोहमुपगतस्तत्रभवान् । हन्त निवेदितमप्रमुत्वम् । मैथिलि !

मङ्गलार्थेऽनया दत्तान् वल्कलांस्तावदानय ।
करोम्यन्यैर्नृपैर्धर्मं नैवाप्तं नोपपादितम् ॥ २४ ॥

सीता-गह्णदु अय्यउत्तो । [ गृह्णात्वार्यपुत्रः । ]

रामः-मैथिलि ! किं व्यवसितम् ।

३ सीता-णं सहधम्मआरिणी क्खु अहं । [ ननु सहधर्मचारिणी खल्वहम् । ]

रामः-मयैकाकिना किल गन्तव्यम् ।

सीता–अदो णु खु अणुगच्छामि । [ अतो नु खल्वनुगच्छामि । ]

रामः–वने खलु वस्तव्यम् ।

सीता–तं खु मे पासादो । [ तत् खलु मे प्रासादः । ]

रामः–श्वश्रूश्वशुरशुश्रूषापि च ते निर्वर्तयितव्या ।

सीता–णं उद्दिसिअ देवदाणं पणामो करीअदि । [ एनामुद्दिश्य देवतानां प्रणामः क्रियते । ]

रामः–लक्ष्मण ! वार्यतामियम् ।

लक्ष्मणः–आर्य नोत्सहे श्लाघनीये काले वारयितुमत्रभवतीम् । कुतः,

अनुचरति शशाङ्कं राहुदोषेऽपि तारा<br>
पतति च वनवृक्षे याति भूमिं लता च ।<br>
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं<br>
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः ॥ २५ ॥

( प्रविश्य )

चेटी–जेदु भट्टिणी । णेवच्छपालिणी अय्यरेवा पणमिअ विण्णवेदि–ओदादिआए सङ्गीदसालादो अच्छिन्दिअ वक्कला आणीदा । इमा अवरा अणणुहूदा वक्कला । णिव्वत्तीअदु दाव किळ पओअणं त्ति । [ जयतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा प्रणम्य विज्ञापयति–अवदातिकया सङ्गीतशालाया आच्छिद्य वल्कला आनीताः । इमेऽपरा अननुभूता वल्कलाः । निर्वर्त्यतां तावत् किल प्रयोजनमिति । ]

रामः–भद्रे ! आनय, संतुष्टैषा । वयमर्थिनः ।

चेटी–गह्णदु भट्टा ( तथा कृत्वा निष्क्रान्ता । ) [ गृह्णातु भर्ता । ]

( रामो गृहीत्वा परिधत्ते । )

लक्ष्मणः–प्रसीदत्वार्यः ।

निर्योगाद् भूषणान्माल्यात् सर्वेभ्योऽर्धं प्रदाय मे ।
चीरमेकाकिना बद्धं चीरे खल्वसि मत्सरी ॥ २६ ॥

राम - मैथिलि ! वार्यतामयम् ।

सीता-सोमित्ते ! णिवत्तीअदु किल । [ सौमित्रे ! निवर्त्यतां किल । ]

३ लक्ष्मण – आर्ये !

गुरोर्मे पादशुश्रूषां त्वमेका कर्तुमिच्छसि ।
तवैव दक्षिणः पादो मम सव्यो भविष्यति ॥ २७ ॥

सीता-दीअदु खु अय्यउत्तो । सन्तप्पदि सोमित्ती । [ दीयतां खल्वार्यपुत्र ! सन्तप्यते सौमित्रिः । ]

३ राम – सौमित्रे ! श्रूयताम् । वल्कलानि नाम,

तपःसङ्ग्रामकवचं नियमद्विरदाङ्कुशः ।
खलीनमिन्द्रियाश्वानां गृह्यतां धर्मसारथिः ॥ २८ ॥

लक्ष्मण -अनुगृहीतोऽस्मि । ( गृहीत्वा परिधत्ते । )

राम श्रुतवृत्तान्तैः पौरैः सनिरुद्धो राजमार्गः । उत्सार्यतामुत्सा-

३ र्यतां तावत् ।

लक्ष्मण – आर्य ! अहमग्रतो यास्यामि । उत्सार्यतामुत्सार्यताम् ।

राम -मैथिलि ! अपनीयतामवगुण्ठनम् ।

६ सीता-ज अय्यउत्तो आणवेदि । ( अपनयति । ) [ यदार्यपुत्र आज्ञापयति । ]

राम - भो भो पौराः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

स्वैरं हि पश्यन्तु कलत्रमेतद् बाष्पाकुलाक्षैर्वदनैर्भवन्तः ।
निर्दोषदृश्या हि भवन्ति नार्यो यज्ञे विवाहे व्यसने वने च ॥२९॥

( प्रविश्य )

काञ्चुकीय -कुमार ! न खलु न खलु गन्तव्यम् । एष हि महाराज,

श्रुत्वा ते वनगमनं वधूसहायं
सौभ्रात्रव्यवसितलक्ष्मणानुयात्रम् ।
उत्थाय क्षितितलरेणुरूषिताङ्गः
कान्तारद्विरद इवोपयाति जीर्णः ॥ ३० ॥

लक्ष्मणः-आर्य !

चीरमात्रोत्तरीयाणां किं दृश्यं वनवासिनाम् ।

रामः-

गतेष्वस्मासु राजा न शिरःस्थानानि पश्यतु ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

---

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति काञ्चुकीयः । )

काञ्चुकीयः-भो भोः प्रतिहारव्यापृताः ! स्वेषु स्वेषु स्थानेष्वप्रमत्ता भवन्तु भवन्तः ।

( प्रविश्य )

प्रतिहारी-अय्य किं एदं । [ आर्य ! किमेतत् । ]

काञ्चुकीयः-एष हि महाराजः सत्यवचनरक्षणपरं राममरण्यं गच्छन्तमुपावर्तयितुमशक्तः पुत्रविरहशोकाग्निना दग्धहृदय उन्मत्त इव बहु प्रलपन् समुद्रगृहके शयानः,

मेरुश्चलन्निव युगक्षयसन्निकर्षे
शोषं व्रजन्निव महोदधिरप्रमेयः ।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः
शोकाद्भृशं शिथिलदेहमतिर्नरेन्द्रः ॥ १ ॥

प्रतिहारी–हा हा एव्वंगओ महाराओ । [ हा हा एवंगतो महाराजः । ]

काञ्चुकीयः–भवति ! गच्छ ।

प्रतिहारी–अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

काञ्चुकीयः–( सर्वतो विलोक्य । ) अहो तु खलु रामनिर्गमनदिनादारभ्य शून्यैवेयमयोध्या संलक्ष्यते । कुतः,

नागेन्द्रा यवसाभिलापविमुखाः सास्रेक्षणा वाजिनो
हेषाशून्यमुखाः सवृद्धवनितावालाश्च पौरा जनाः ।
त्यक्ताहारकथाः सुदीनवदनाः क्रन्दन्त उच्चैर्दिशा
रामो याति यया सदारसहजस्तामेव पश्यन्त्यमी ॥ २ ॥

यावदहमपि महाराजस्य समीपवर्ती भविष्यामि । (परिक्रम्यावलोक्य) अये ! अयं महाराजो महादेव्या सुमित्रया च मुहुःसहमपि पुत्रविरहसमुद्भवं शोकं निगृह्यात्मानमेव संस्थापयन्तीभ्यामन्वास्यमानस्तिष्ठति । कष्टा खल्ववस्था वर्तते । एष एष महाराजः,

पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्वहः ॥ ३ ॥

( निष्क्रान्तः । )

मिश्रविष्कम्भकः ।

---

( ततः प्रविशति यथानिर्दिष्टो राजा देव्यौ च । )

राजा–

हा वत्स ! राम ! जगतां नयनाभिराम !
हा वत्स ! लक्ष्मण ! सुलक्षणसर्वगात्र ! ।
हा साध्वि ! मैथिलि ! पतिस्थितचित्तवृत्ते !
हा हा गताः किल वनं वत मे तनूजाः ॥ ४ ॥

चित्रमिदं भोः ! यद् भ्रातृस्नेहात् पितरि विमुक्तस्नेहमपि तावल्लक्ष्मणं द्रष्टुमिच्छामि । वधु वैदेहि ।

रामेणापि परित्यक्तो लक्ष्मणेन च गर्हितः ।
अयशोभाजनं लोके परित्यक्तस्त्वयाप्यहम् ॥ ५ ॥

पुत्र राम ! वत्स लक्ष्मण ! वधु वैदेहि । प्रयच्छत मे प्रतिवचनं पुत्रकाः ! शून्यमिदं भोः । न मे कश्चित् प्रतिवचनं प्रयच्छति ।
३ कौसल्यामातः कासि ।

सत्यसन्ध ! जितक्रोध ! विमत्सर ! जगत्प्रिय ! ।
गुरुशुश्रूषणे युक्त ! प्रतिवाक्य प्रयच्छ मे ॥ ६ ॥

हा कासौ सर्वजनहृदयनयनाभिरामो रामः, कासौ मयि गुर्वनुवृत्तिः । कासौ शोकार्तेष्वनुकम्पा । कासौ तृणवदगणितराज्यैश्वर्यः ।
३ पुत्र ! राम ! वृद्धं पितरं मां परित्यज्य किमसम्बद्धेन धर्मेण ते कृत्यम् हा धिक् । कष्टं भोः !

सूर्य इव गतो रामः सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।
सूर्यदिवसावसाने छायेव न दृश्यते सीता ॥ ७ ॥

( ऊर्ध्वमवलोक्य । ) भोः कृतान्तहतक !

अनपत्या वयं रामः पुत्रोऽन्यस्य महीपतेः ।
वने व्याघ्री च कैकेयी त्वया किं न कृतं त्रयम् ॥ ८ ॥

कौसल्या- ( सरुदितम् ) अलं दाणि महाराओ अदिमत्तं सन्तप्पिअ परवसं अत्ताणं कादुं । णं सा ते अ कुमारा महाराअस्स सम-
३ आवसाणे पेक्खिदव्वा भविस्सन्ति । [ अलमिदानीं महाराजोऽतिमात्रं सन्तप्य परवशमात्मानं कर्तुम् । ननु सा तौ च कुमारौ महाराजस्य समयावसाने प्रेक्षितव्या भविष्यन्ति । ]
६ राजा-का त्वं भोः ।

कौसल्या–असिणिद्धपुत्तप्पसविणी खु अहं । [ अस्निग्धपुत्रप्रसविनी खल्वहम् । ]

राजा–किं किं सर्वजनहृदयनयनाभिरामस्य रामस्य जननी त्वमसि कौसल्या ।

कौसल्या–महाराअ ! सा एव मन्दभाइणी खु अहं । [ महाराज ! सैव मन्दभागिनी खल्वहम् । ]

राजा–कौसल्ये सारवती खल्वसि । त्वया हि खलु रामो गर्भे धृतः ।

अहं हि दुःखमत्यन्तमसह्यं ज्वलनोपमम् ।
नैव सोढुं न सहर्तुं शक्नोमि मुषितेन्द्रियः ॥ ९ ॥

( सुमित्रा विलोक्य । ) इयमपरा का ।

कौसल्या–महाराअ ! वच्छलक्खण– । ( इत्यर्धोक्ते ) [ महाराज ! वत्सलक्ष्मण– । ]

राजा–( सहसोत्थाय– ) क्वासौ क्वासौ लक्ष्मणः । न दृश्यते । भोः कष्टम् ।

( देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते । )

कौसल्या–महाराअ ! वच्छलक्खणस्स जणणी सुमित्तत्ति वत्तुं मए उवक्कन्दं । [ महाराज ! वत्सलक्ष्मणस्य जननी सुमित्रेति वक्तुं मयोपक्रान्तम् । ]

राजा–अयि सुमित्रे !

तवैव पुत्रः सत्पुत्रो येन नक्तन्दिवं वने ।
रामो रघुकुलश्रेष्ठश्छाययेवानुगम्यते ॥ १० ॥

( प्रविश्य )

काञ्चुकीयः–जयतु महाराजः । एष खलु तत्रभवान् सुमन्त्रः प्राप्तः ।

राजा-( सहसोत्थाय सहर्षम् । ) अपि रामेण ।

काञ्चुकीयः–न खलु, रथेन ।

राजा-कथं कथं रथेन केवलेन । ( इति मूर्च्छितः पतति । )

देव्यौ-महाराअ ! समस्ससिहि समस्ससिहि । ( गात्राणि परामशतः । ) [ महाराज ! समाश्वसिहि समाश्वसिहि । ]

काञ्चुकीयः–भोः । कष्टम् । ईदृग्विधाः पुरुषविशेषा ईदृशीमापदं प्राप्नुवन्तीति विधिरनतिक्रमणीयः । महाराज ! समाश्वसिहि समाश्वसिहि ।

राजा-( किञ्चित् समाश्वस्य । ) बालाके ! सुमन्त्र एक एव ननु प्राप्तः ।

काञ्चुकीयः–महाराज ! अथ किम् ।

राजा-कष्टं भोः !

शून्यः प्राप्तो यदि रथो भग्नो मम मनोरथः ।
नूनं दशरथं नेतुं कालेन प्रेषितो रथः ॥ ११ ॥

तेन हि शीघ्रं प्रवेश्यताम् ।

काञ्चुकीयः–यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

राजा–

धन्याः खलु वने वातास्तटाकपरिवर्तिनः ।
विचरन्तं वने रामं ये स्पृशन्ति यथासुखम् ॥ १२ ॥

( ततः प्रविशति सुमन्त्रः । )

सुमन्त्रः– ( सर्वतो विलोक्य सशोकम् । )

एते भृत्याः स्वानि कर्माणि हित्वा स्नेहाद् रामे जातबाष्पाकुलाक्षाः ।
चिन्तादीनाः शोकसंदग्धदेहा विक्रोशन्तं पार्थिवं गर्हयन्ति ॥ १३ ॥

( उपेत्य । ) जयतु महाराजः ।

राजा—भ्रातः ! सुमन्त्र !
क मे ज्येष्ठो रामः—
नहि नहि युक्तमभिहितं मया ।

क ते ज्येष्ठो रामः प्रियसुत ! सुतः सा क दुहिता
विदेहानां भर्तुर्निरतिशयभक्तिर्गुरुजने ।
क वा सौमित्रिर्मां हतपितृकमासन्नमरणं
किमप्याहुः किं ते सकलजनशोकार्णवकरम् ॥ १४ ॥

सुमन्त्रः— महाराज ! मा मैवममङ्गल्यवचनानि भाषिष्ठाः । अचिरादेव तान् द्रक्ष्यसि ।

राजा—सत्यमयुक्तमभिहितं मया । नायं तपस्विनामुचितः प्रश्नः । तत् कथ्यताम् । अपि तपस्विनां तपो वर्धते । अप्यरण्यानि स्वाधीनानि विचरन्ती वैदेही न परिखिद्यते ।

सुमित्रा—सुमन्त ! बहुवक्कलालङ्किदसरीरा बाला वि अबालचरित्ता भत्तुणो सहधम्मआरिणि अम्हे महाराअं च किंचि णालवदि । [ सुमन्त्र ! बहुवल्कलालङ्कृतशरीरा बालाप्यबालचारित्रा भर्तुः सहधर्मचारिणी अस्मान् महाराज च किञ्चिन्नालपति । ]

सुमन्त्र — सर्व एव महाराजम् ।

राजा—न न । श्रोत्ररसायनैर्मम हृदयातुरौषधैरेषां नामधेयैरेव भावय ।

सुमन्त्रः—यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

राजा—राम इति । अयं रामः । तन्नामश्रवणात् स्पृष्ट इव मे प्रतिभाति । ततस्ततः ।

सुमन्त्रः— आयुष्मान् लक्ष्मणः ।

राजा—अयं लक्ष्मणः । ततस्ततः ।

सुमन्त्रः— आयुष्मती सीता जनकराजपुत्री ।

राजा–इयं वैदेही । रामो लक्ष्मणो वैदेहीत्ययमक्रमः ।

सुमन्त्रः–अथ कः क्रमः ।

राजा–रामो वैदेही लक्ष्मण इत्यभिधीयताम् ।

रामलक्ष्मणयोर्मध्ये तिष्ठत्यत्रापि मैथिली ।
बहुदोषाण्यरण्यानि सनाथैषा भविष्यति ॥ १५ ॥

सुमन्त्रः–यदाज्ञापयति महाराजः । आयुष्मान् रामः ।

राजा–अयं रामः ।

सुमन्त्रः–आयुष्मती जनकराजपुत्री ।

राजा–इयं वैदेही ।

सुमन्त्रः–आयुष्मान् लक्ष्मणः ।

राजा–अयं लक्ष्मणः । राम ! वैदेहि ! लक्ष्मण ! परिष्वजध्वं मां पुत्रकाः ! ।

सकृत् स्पृशामि वा रामं सकृत् पश्यामि वा पुनः ।
गतायुरमृतेनेव जीवामीति मतिर्मम ॥ १६ ॥

सुमन्त्रः–शृङ्गिवेरपुरे रथादवतीर्यायोध्याभिमुखाः स्थित्वा सर्व एव महाराजं शिरसा प्रणम्य विज्ञापयितुमारब्धाः ।

कमप्यर्थं चिरं ध्यात्वा वक्तुं प्रस्फुरिताधराः ।
बाष्पस्तम्भितकण्ठत्वादनुक्त्वैव वनं गताः ॥ १७ ॥

राजा–कथमनुक्त्वैव वनं गताः । ( इति द्विगुणं मोहमुपगतः । )

सुमन्त्रः– ( ससम्भ्रमम् ) बालाके ! उच्यताममात्येभ्यः– अप्रतीकारायां दशायां वर्तते महाराज इति ।

काञ्चुकीयः– तथा । ( निष्क्रान्तः । )

देव्यो–महाराअ ! समस्ससिहि समस्ससिहि । [ महाराज ! समाश्वसिहि समाश्वसिहि । ]

राजा– ( किञ्चित् समाश्वस्य । )

अङ्गं मे स्पृश कौसल्ये ! न त्वां पश्यामि चक्षुषा ।
रामं प्रति गता बुद्धिरद्यापि न निवर्तते ॥ १८ ॥

पुत्र ! राम ! यत् खलु मया सन्ततं चिन्तितं,
राज्ये त्वामभिषिच्य सन्नरपतेर्लाभात् कृतार्थाः प्रजाः
कृत्वा त्वत्सहजान् समानविभवान् कुर्वात्मनः सन्ततम् ।
इत्यादिश्य च ते तपोवनमितो गन्तव्यमित्येतया
कैकेय्या हि तदन्यथा कृतमहो निःशेषमेकक्षणे ॥ १९ ॥

सुमन्त्र ! उच्यतां कैकेय्याः—
गतो रामः प्रियं तेऽस्तु त्यक्तोऽहमपि जीवितैः ।
क्षिप्रमानीयतां पुत्रः पापं सफलमस्त्विति ॥ २० ॥

सुमन्त्रः—यदाज्ञापयति महाराजः ।

राजा—( ऊर्ध्वमवलोक्य । ) अये रामकथाश्रवणसन्दग्धहृदयं मामाश्वासयितुमागताः पितरः । कोऽत्र ।

( प्रविश्य )

काञ्चुकीयः—जयतु महाराजः ।

राजा—आपस्तावत् ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य । ) जयतु महाराजः । इमा आपः ।

राजा—( आचम्यावलोक्य । )
अयममरपतेः सखा दिलीपो रघुरयमत्रभवानजः पिता मे ।
किमभिगमनकारणं भवद्भिः सह वसने समयो ममापि तत्र ॥२१॥
राम ! वैदेहि ! लक्ष्मण ! अहमितः पितॄणां सकाशं गच्छामि ।
हे पितरः ! अयमयमागच्छामि । ( मूर्च्छया पराभूतः । )

( काञ्चुकीयो यवनिकास्तरणं करोति । )

सर्वे—हा हा महाराओ । [ हा हा महाराजः । ]

( निष्क्रान्ताः सर्वे । )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति सुधाकारः । )

सुधाकारः—( सम्मार्जनादीनि कृत्वा । ) भोदु, दाणिं किदं एत्थ कय्यं अय्यसम्भवअस्स आणत्तं । जाव मुहुत्तं सुविस्सं । ( स्वपिति । ) [ भवतु, इदानीं कृतमत्र कार्यमार्यसंभवकस्याज्ञप्तम् । यावन्मुहूर्तं स्वप्स्यामि । ]

( प्रविश्य )

भटः—( चेटमुपगम्य ताडयित्वा । ) अह्यो दासीएपुत्त ! किं दाणिं कम्मं ण करेसि । ( ताडयति । ) [ अह्यो दास्याः पुत्र ! किमिदानीं कर्म न करोषि । ]

सुधाकारः—( बुद्ध्वा । ) ताळेहि मं ताळेहि मं [ ताडय मां ताडय माम् । ]

भटः—ताडिदे तुवं किं करिस्ससि । [ ताडिते त्वं किं करिष्यसि । ]

सुधाकारः—अहण्णस्स मम कत्तवीअस्स विअ बाहुसहस्सं णत्थि । [ अधन्यस्य मम कार्तवीर्यस्येव बाहुसहस्रं नास्ति । ]

भटः—बाहुसहस्सेण किं कय्यं । [ बाहुसहस्रेण किं कार्यम् । ]

सुधाकारः—तुवं हणिस्सं । [ त्वां हनिष्यामि । ]

भटः—एहि दासीएपुत्त ! मुदे मुञ्चिस्सं । ( पुनरपि ताडयति । ) [ एहि दास्याः पुत्र ! मृते मोक्ष्यामि । ]

सुधाकारः—( रुदित्वा । ) सव्वं दाणिं भट्टा ! मे अवराहं जाणिदुम् ।

[ शक्यमिदानीं भर्तः । मेऽपराधं ज्ञातुम् । ]

भटः–णत्थि किळ अवराहो णत्थि । णं मए सन्दिट्ठो भट्टिदारअस्स रामस्स रज्जविब्भट्ठकिदसन्दावेण सग्गं गदस्स भट्टिणो दसरहस्स पडिमागेहं देट्ठुं अज्ज कोसल्लापुरोएहिं सव्वेहिं अन्तेउरेहिं इह आअन्तव्वं त्ति । एत्थ दाणि तुए किं किदं । [ नास्ति किलापराधो नास्ति । ननु मया सन्दिष्टो भर्तृदारकस्य रामस्य राज्यविभ्रष्टकृतसन्तापेन स्वर्गं गतस्य भर्तुर्दशरथस्य प्रतिमागेहं द्रष्टुमद्य कोसल्यापुरोगैः सर्वैरन्तःपुरैरिहागन्तव्यमिति । अत्रेदानीं त्वया किं कृतम् । ]

सुधाकारः–पेक्खदु भट्टा । अवणीदकवोदसन्दाणअं दाव गब्भगिहं । सोहवण्णअदत्तचन्दणपञ्चाङ्गुळा भित्तीओ । ओसत्तमल्लदामसोहीणि दुवाराणि । पइण्णा वालुआ । एत्थ दाणि मए किं ण किदं । [ पश्यतु भर्ता । अपनीतकपोतसन्दानकं तावद् गर्भगृहम् । सौधवर्णकदत्तचन्दनपञ्चाङ्गुला भित्तयः । अवसक्तमाल्यदामशोभीनि द्वाराणि । प्रकीर्णा वालुकाः । अत्रेदानीं मया किं न कृतम् । ]

भटः–जइ एवं, विस्सत्थो गच्छ । जाव अहं वि सव्वं किदं त्ति अमच्चस्स णिवेदेमि । [ यद्येवं, विश्वस्तो गच्छ । यावदहमपि सर्वं कृतमित्यमात्याय निवेदयामि । ]

( निष्क्रान्तौ । )

प्रवेशकः ।

---

( ततः प्रविशति भरतो रथेन सूतश्च । )

भरतः– ( सावेगम् । ) सूत ! चिरं मातुलपरिचयादविज्ञातवृत्तान्तोऽस्मि । श्रुतं मया दृढमकल्यशरीरो महाराज इति । तदुच्यताम्

पितुर्मे को व्याधिः

सूतः– हृदयपरितापः खलु महान्

भरतः— किमाहुस्तं वैद्याः

सूतः— न खलु भिषजस्तत्र निपुणाः।

भरतः— किमाहारं भुङ्क्ते शयनमपि

सूतः— भूमौ निरशनः

भरतः— किमाशा स्याद्

सूतः— दैवं

भरतः— स्फुरति हृदयं वाहय रथम् ॥ १ ॥

सूतः— यदाज्ञापयत्यायुष्मान्। ( रथं वाहयति। )

भरतः— ( रथवेगं निरूप्य ) अहो नु खलु रथवेगः। एते ते

द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया
नदीवोद्वृत्ताम्बुर्निपतति मही नेमिविवरे।
अरव्यक्तिर्नष्टा स्थितमिव जवाच्चक्रवलयं
रजश्चाश्वोद्धूतं पतति पुरतो नानुपतति ॥ २ ॥

सूतः— आयुष्मन्! सोपस्नेहतया वृक्षाणामभितः खल्वयोध्यया भवितव्यम्।

३ भरतः—अहो नु खलु स्वजनदर्शनोत्सुकस्य त्वरता मे मनसः। सम्प्रति हि,

पतितमिव शिरः पितुः पादयोः
स्निह्यतेवास्मि राज्ञा समुत्थापितः
त्वरितमुपगता इव भ्रातरः
क्लेदयन्तीव मामश्रुभिर्मातरः।
सदृश इति महानिति व्यायतश्चेति
भृत्यैरिवाहं स्तुतः सेवया
परिहसितमिवात्मनस्तत्र पश्यामि
वेषं च भाषां च सौमित्रिणा ॥ ३ ॥

सूतः—( आत्मगतम् ) भोः ! कष्टम्, यदयमविज्ञाय महाराजविनाशमुदर्के निष्फलामाशां परिगृह्यायोध्यां प्रवेक्ष्यति कुमारः । जानद्भिरप्यस्माभिर्न निवेद्यते । कुतः,

पितुः प्राणपरित्यागं मातुरैश्वर्यलुब्धताम् ।
ज्येष्ठभ्रातुः प्रवासं च त्रीन् दोषान् कोऽभिधास्यति ॥ ४ ॥

( प्रविश्य )

भटः—जयतु कुमारः ।

भरतः—भद्र ! किं शत्रुघ्नो मामभिगतः ।

भटः—अभिगतः खलु वर्तते कुमारः । उपाध्यायास्तु भवन्तमाहुः ।

भरतः—किमिति किमिति ।

भटः—एकनाडिकावशेषः कृत्तिकाविषयः । तस्मात् प्रतिपन्नायामेव रोहिण्यामयोध्यां प्रवेक्ष्यति कुमारः ।

भरतः—बाढमेवम् । न मया गुरुवचनमतिक्रान्तपूर्वम् । गच्छ त्वम् ।

भटः—यदाज्ञापयति कुमारः । ( निष्क्रान्तः । )

भरतः—अथ कस्मिन् प्रदेशे विश्रमिष्ये । भवतु, दृष्टम् । एतस्मिन् वृक्षान्तराविष्कृते देवकुले मुहूर्तं विश्रमिष्ये । तदुभयं भविष्यति दैवतपूजा विश्रमश्च । अथ च उपोपविश्य प्रवेष्टव्यानि नगराणीति सत्समुदाचारः । तस्मात् स्थाप्यतां रथः ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( रथं स्थापयति । )

भरतः—( रथादवतीर्य ) सूत ! एकान्ते विश्रामयाश्वान् ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( निष्क्रान्तः । )

भरतः—( किञ्चिद् गत्वावलोक्य ) साधुमुक्तपुष्पलाजाविष्कृता बल्य दत्तचन्दनपञ्चाङ्गुलाभित्तयः, अवसक्तमाल्यदामशोभीनि द्वाराणि, प्रकीर्णा वालुकाः । किन्नु खलु पार्वणोऽयं विशेषः, अथवा आह्निकमास्तिक्यम् । कस्य नु खलु दैवतस्य स्थानं भविष्यति ।

नेह किञ्चित् प्रहरणं ध्वजो वा बहिश्चिह्नं दृश्यते । भवतु, प्रविश्य ज्ञास्ये । (प्रविश्यावलोक्य ।) अहो क्रियामाधुर्यं पाषाणानाम् । अहो भावगतिराकृतीनाम् । दैवतोद्दिष्टानामपि मानुषविश्वासतासां प्रतिमानाम् । किन्तु खलु चतुर्दैवतोऽयं स्तोमः । अथवा यानि तानि भवन्तु । अस्ति तावन्मे मनसि प्रहर्षः ।

कामं दैवतमित्येव युक्तं नमयितुं शिरः ।
शार्षलस्तु प्रणामः स्यादमन्त्रार्चितदैवतः ॥ ५ ॥

( प्रविश्य )

देवकुलिकः—भोः ! नैत्यकावसाने प्राणिधर्ममनुतिष्ठति मयि को नु खल्वयमासां प्रतिमानामल्पान्तराकृतिरिव प्रतिमागृहं प्रविष्टः । भवतु, प्रविश्य ज्ञास्ये । ( प्रविशति । )

भरतः—नमोस्तु ।

देवकुलिकः— न खलु न खलु प्रणामः कार्यः ।

भरतः— मा तावद् भोः !

वक्तव्यं किञ्चिदस्मासु विशिष्टः प्रतिपाल्यते ।
किङ्कृतः प्रतिषेधोऽयं नियमप्रभविष्णुता ॥ ६ ॥

देवकुलिकः— न खल्वेतैः कारणैः प्रतिषेधयामि भवन्तम् । किन्तु दैवतशङ्कया ब्राह्मणजनस्य प्रणामं परिहरामि । क्षत्रिया ह्यत्रभवन्तः ।

भरतः—एवम् । क्षत्रिया ह्यत्रभवन्तः । अथ के नामात्रभवन्तः ।

देवकुलिकः— इक्ष्वाकवः ।

भरतः—( सहर्षम् ) इक्ष्वाकव इति । एते तेऽयोध्याभर्तारः ।

एते ते दैवतानामसुरपुरवधे गच्छन्त्यग्रिसरी-
मेते ते शक्रलोके सपुरजनपदा यान्ति स्वसुकृतैः ।
एते ते प्राप्नुवन्तः स्वभुजबलजितां कृत्स्नां वसुमती-
मेते ते मृत्युना ये चिरमनवसितादछन्दं मृगयता ॥७॥

भोः ! यदृच्छया खलु मया मङ्क्तुं कल्मासादितम् । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः—अयं खलु तावत् सन्निहितसर्वरत्नस्य विश्वजितो यज्ञस्य प्रवर्तयिता प्रज्वलितधर्मप्रदीपो दिलीपः ।

भरत.—नमोस्तु धर्मपरायणाय । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः—अयं खलु तावत् संवेशनोत्थापनयोरनेकब्राह्मणजनसहस्रप्रयुक्तपुण्याहशब्दरवो रघुः ।

भरतः—अहो बलवान् मृत्युरेतामपि रक्षामतिक्रान्तः । नमोस्तु ब्राह्मणजनावेदितराज्यफलाय । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः—अयं खलु तावत् प्रियावियोगनिर्वेदपरित्यक्तराज्यभारो नित्यावभृथस्नानप्रशातरजा अजः ।

भरतः—नमोऽस्तु श्लाघनीयपश्चात्तापाय । ( दशरथस्य प्रतिमामवलोकयन् पर्याकुलो भूत्वा । ) भोः ! बहुमानव्याक्षिप्तेन मनसा सुव्यक्तं नावधारितम् । अभिधीयतां कस्तावदत्रभवान् ।

देवकुलिकः—अयं दिलीपः ।

भरतः—पितृपितामहो महाराजस्य । ततस्ततः ।

देवकुलिकः—अत्रभवान् रघुः ।

भरतः—पितामहो महाराजस्य । ततस्ततः ।

देवकुलिकः—अत्रभवानजः ।

भरतः—पिता तातस्य । किमिति किमिति ।

देवकुलिकः—अयं दिलीपः, अयं रघुः, अयमजः ।

भरतः—भवन्तं किञ्चित् पृच्छामि । धरमाणानामपि प्रतिमाः स्थाप्यन्ते ।

देवकुलिकः—न खलु अतिक्रान्तानामेव ।

भरतः—तेन ह्यापृच्छे भवन्तम् ।

देवकुलिकः—तिष्ठ ।

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः ।
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसे ॥ ८ ॥

भरतः—हा तात ! । ( मूर्छितः पतति । पुनः प्रत्यागत्य । )

हृदय भव सकामं यत्कृते शङ्कसे त्वं
श्रृणु पितृनिधनं तद् गच्छ धैर्यं च तावत् ।
स्पृशति तु यदि नीचो मामयं शुल्कशब्द-
स्त्वथ च भवति सत्यं तत्र देहो विशोध्यः ॥ ९ ॥

आर्य ! ।

देवकुलिकः—आर्येति इक्ष्वाकुकुलालापः खल्वयम् । कच्चित् कैकेयीपुत्रो भरतो भवान् ननु ।

भरतः—अथ किमथ किम् । दशरथपुत्रो भरतोऽस्मि न कैकेय्याः ।

देवकुलिकः—तेन ह्यापृच्छे भवन्तम् ।

भरतः—तिष्ठ । शेषमभिधीयताम् ।

देवकुलिकः—का गतिः । श्रूयताम् । उपरतस्तत्रभवान् दशरथः । सीतालक्ष्मणसहायस्य रामस्य वनगमनप्रयोजनं न जाने ।

भरतः—कथं कथम्, आर्योऽपि वनं गतः । ( द्विगुणं मोहमुपगतः । )

देवकुलिकः—कुमार ! समाश्वसिहि समाश्वसिहि ।

भरतः—( समाश्वस्य । )

अयोध्यामटवीभूतां पित्रा भ्रात्रा च वर्जिताम् ।
पिपासार्तोऽनुधावामि क्षीणतोयां नदीमिव ॥ १० ॥

आर्य ! विस्तरश्रवणं मे मनसः स्थैर्यमुत्पादयति । तत् सर्वमनवशेषमभिधीयताम् ।

देवकुलिकः—श्रूयतां, तत्रभवता राज्ञाभिषिच्यमाने तत्रभवति रामे भवतो जनन्याभिहितं किल ।

भरतः—तिष्ठ ।

तं स्मृत्वा शुल्कदोषं भवतु मम सुतो राजेत्यभिहितं
तद्वैर्येणाश्वसत्या व्रज सुत ! वनमित्यार्योऽप्यभिहितः।
तं दृष्ट्वा चद्धचीरं निधनमसदृशं राजा ननु गतः
पात्यन्ते धिक्प्रलापा ननु मयि सदृशाः शेषाः प्रकृतिभिः ॥ ११ ॥

( मोहमुपगतः। )

( नेपथ्ये )

३ उस्सरह अय्या ! उस्सरह। [ उत्सरतार्याः ! उत्सरत। ]

देवकुलिकः–( विलोक्य। ) अये,

काले खल्वागता देव्यः पुत्रे मोहमुपागते।
हस्तस्पर्शो हि मातॄणामजलस्य जलाञ्जलिः ॥ १२ ॥

( ततः प्रविशन्ति देव्यः सुमन्त्रश्च। )

सुमन्त्रः–इत इतो भवत्यः।

इदं गृहं तत् प्रतिमानृपस्य नः समुच्छ्रयो यस्य स हर्म्यदुर्लभः।
अयन्त्रितप्रतिहारिकागतैर्विना प्रणामं पथिकैरुपास्यते ॥ १३ ॥

( प्रविश्यावलोक्य। ) भवत्यः ! न खलु न खलु प्रवेष्टव्यम्।

अयं हि पतितः कोऽपि वयस्थ इव पार्थिवः।

देवकुलिक –

परशङ्कामलं कर्तुं गृह्यतां भरतो ह्ययम् ॥ १४ ॥

( निष्क्रान्तः। )

देव्यः–( सहसोपगम्य। ) हा जाद ! भरद ! । [ हा जात ! भरत ! ]

२ भरतः–( किञ्चित् समाश्वस्य। ) आर्य ! ।

सुमन्त्रः–जयतु महा— ( इत्यर्धोक्ते सविषादम्। ) अहो स्वर-साादृश्यम्। मन्ये प्रतिमास्थो महाराजो व्याहरतीति।

६ भरतः–अथ मातॄणामिदानीं कावस्था।

देव्यः—जाद ! एसा णो अवत्था । ( अवगुण्ठनमपनयन्ति । ) [ जात ! एषा नोऽवस्था । ]

सुमन्त्रः—भवन्तः ! निगृह्यतामुत्कण्ठा ।

भरतः— ( सुमन्त्रं विलोक्य । ) सर्वसमुदाचारसन्निकर्षस्तु मां सूचयति । कच्चित् तात ! सुमन्त्रो भवान् ननु ।

सुमन्त्रः— कुमार ! अथ किम् । सुमन्त्रोऽस्मि ।

अन्वास्यमानश्चिरजीवदोषैः कृतघ्नभावेन विडम्ब्यमानः ।
अहं हि तस्मिन् नृपतौ विपन्ने जीवामि शून्यस्य रथस्य सूतः ॥ १५ ॥

भरतः—हा तात ! ( उत्थाय । ) तात ! अभिवादनक्रममुपदेष्टुमिच्छामि मातॄणाम् ।

सुमन्त्रः—बाढम् । इयं तत्रभवतो रामस्य जननी देवी कौसल्या ।

भरतः—अम्ब ! अनपराद्धोऽहमभिवादये ।

कौसल्या—जाद ! णिस्सन्दावो होहि । [ जात ! निःसंतापो भव । ]

भरतः—( आत्मगतम् । ) आक्रुष्ट इवास्म्यनेन । ( प्रकाशम् । ) अनुगृहीतोऽस्मि । ततस्ततः ।

सुमन्त्रः—इयं तत्रभवतो लक्ष्मणस्य जननी देवी सुमित्रा ।

भरतः—अम्ब ! लक्ष्मणेनातिसन्धितोऽहमभिवादये ।

सुमित्रा—जाद ! जसोभाई होहि । [ जात ! यशोभागी भव । ]

भरतः—अम्ब ! इदं प्रयतिष्ये । अनुगृहीतोऽस्मि । ततस्ततः ।

सुमन्त्रः—इयं ते जननी ।

भरतः—( सरोषमुत्थाय । ) आः पापे !

मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।
गङ्गायमुनयोर्मध्ये कुनदीव प्रवेशिता ॥ १६ ॥

कैकेयी—जाद ! किं मए किदं । [ जात ! किं मया कृतम् । ]

भरतः— किं कृतमिति वदसि ।

वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।
दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमै-
र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥ १७ ॥

कौसल्या—जाद ! सव्वसमुदाआरमब्भत्थो किं ण वन्दसि मादरं ।
[ जात ! सर्वसमुदाचारमभ्यस्तः किं न वन्दसे मातरम् । ]

भरत.—मातरमिति । अम्ब ! त्वमेव मे माता । अम्ब ! अभिवादये ।

कौसल्या—णहि णहि ! इअं दे जणणी । [ नहि नहि । इयं ते जननी । ]

भरतः—आसीत् पुरा । न त्विदानीम् । पश्यतु भवती,

त्यक्त्वा स्नेहं शीलसङ्क्रान्तदोषैः
पुत्रास्तावत्तन्यपुत्राः क्रियन्ते ।
लोकेऽपूर्वं स्थापयाम्येष धर्मं
भर्तृद्रोहादस्तु माताप्यमाता ॥ १८ ॥

कैकेयी—जाद ! महाराअस्स सच्चवअणं रक्खन्तीए मए तह उत्तं ।
[ जात ! महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम् । ]

भरतः—किमिति किमिति ।

कैकेयी—पुत्तओ मे राजा होदु त्ति । [ पुत्रको मे राजा भवत्विति । ]

भरत.—अथ स इदानीमार्योऽपि भवत्याः कः ।

पितुर्मे नौरसः पुत्रो न क्रमेणाभिषिच्यते ।
दयिता भ्रातरो न स्युः प्रकृतीनां न रोचते ॥ १९ ॥

कैकेयी—जाद ! सुक्कलुद्धा णणु पुच्छिदव्वा । [ जात ! शुल्कलुब्धा ननु प्रष्टव्या । ]

भरत.—

वल्कलैर्हृतराज्यश्रीः पदातिः सह भार्यया ।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम् ॥ २० ॥

कैकेयी—जाद ! देसकाले णिवेदेमि । [ जात ! देशकाले निवेदयामि । ]

भरतः—

अयशसि यदि लोभः कीर्तयित्वा किमस्मान्
किमु नृपफलतर्षः किं नरेन्द्रो न दद्यात् ।
अथ तु नृपतिमातेत्येष शब्दस्तवेष्टो
वदतु भवति ! सत्यं किं तवार्यो न पुत्रः ॥ २१ ॥

कष्टं कृतं भवत्या

त्वया राज्यैषिण्या नृपतिरसुभिर्नैव गणितः
सुतं ज्येष्ठं च त्वं व्रज वनमिति प्रेषितवती ।
न दीर्णं यद् दृष्ट्वा जनकतनयां वल्कलवती-
महो धात्रा सृष्टं भवति हृदयं वज्रकठिनम् ॥ २२ ॥

*सुमित्रः—कुमार ! एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं* पुरस्कृत्य भवन्तं प्रत्युद्गतौ विज्ञापयतः ।

गोपहीना यथा गावो विलयं यान्त्यपालिताः ।
एवं नृपतिहीना हि विलयं यान्ति वै प्रजाः ॥ २३ ॥

भरतः—अनुगच्छन्तु मां प्रकृतयः ।

सुमित्रः—अभिषेकं विसृज्य क्व भवान् यास्यति ।

२ भरतः—अभिषेकमिति । इहात्रभवत्यै प्रदीयताम् ।

सुमित्रः—क्व भवान् यास्यति ।

भरतः—

तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥ २४ ॥

( निष्क्रान्ताः सर्वे । )

तृतीयोऽङ्कः

---

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशतश्चेट्यौ । )

विजया-हळा णन्दिणिए ! भणेहि भणेहि । अज्ज कोसळ्ळापुरोगेहि सव्वेहि अन्तेपुरेहि पडिमागेहं दट्ठुं गदेहि तहिं किळ भट्टिदारओ भरदो दिट्ठो । अहं च मन्दभाआ दुवारे ट्ठिदा । [ हला नन्दिनिके ! भण भण । अद्य कौसल्यापुरोगैः सर्वैरन्तःपुरैः प्रतिमागेहं द्रष्टुं गतस्तत्र किल भर्तृदारको भरतो दृष्टः । अहं च मन्दभागा द्वारे स्थिता । ]

नन्दिनिआ-हळा ! दिट्ठो अम्हेहि कोदूहळेण भट्टिदारओ भरदो । [ हला ! दृष्टोऽस्माभि कौतूहलेन भर्तृदारको भरतः । ]

विजया-भट्टिणी कुमारेण किं भणिदा । [ भट्टिनी कुमारेण किं भणिता । ]

नन्दिनिआ- किं भणिदं । ओळोइदुं वि णेच्छदि कुमारो । [ किं भणितम् । अवलोकितुमपि नेच्छति कुमारः । ]

विजया-अहो अच्चाहिदम् । रज्जलुद्धाए भट्टिदारअस्स रामस्स रज्जविब्भट्ठं करन्तीए अत्तणो वेहव्वं आदिट्ठं । लोओ वि विणासं गमिओ । णिग्घिणा हु भट्टिणी । पावअं किदं । [ अहो अत्याहितम् । राज्यलुब्धया भर्तृदारकस्य रामस्य राज्यविभ्रष्टं कुर्वत्यात्मनो वैधव्यमादिष्टम् । लोकोऽपि विनाशं गमितः । निर्घृणा खलु भट्टिनी । पापकं कृतम् । ]

नन्दिनिआ-हळा ! सुणाहि । पइदीहि आणीदं अभिसेअं विसज्जिअ रामतवोवणं गदो कुमारो । [ हला ! शृणु । प्रकृतिभिरानीतमभिषेकं विसृज्य रामतपोवनं गतः कुमारः । ]

विजया- ( सविषादम् ) हं । एवं गदो कुमारो । णन्दिणिए ! एहि,

अम्हे भट्टिणिं पेक्खामो । [ हम् । एवं गतः कुमारः । नन्दिनिके ! एह्यावां भट्टिनीं पश्यावः । ]

( निष्क्रान्ते । )

प्रवेशकः ।

---

( ततः प्रविशति भरतो रथेन सुमन्त्रः सूतश्च । )

भरतः–

स्वर्गं गते नरपतौ सुकृतानुयात्रे
पौराश्रुपातसलिलैरनुगम्यमानः ।
द्रष्टुं प्रयाम्यकृपणेषु तपोवनेषु
रामाभिधानमपरं जगतः शशाङ्कम् ॥ १ ॥

सुमन्त्रः– एष एष आयुष्मान् भरतः,

दैत्येन्द्रमानमथनस्य नृपस्य पुत्रो
यज्ञोपयुक्तविभवस्य नृपस्य पौत्रः ।
भ्राता पितुः प्रियकरस्य जगत्प्रियस्य
रामस्य रामसदृशेन पथा प्रयाति ॥ २ ॥

भरतः–भोस्तात !

सुमन्त्रः–कुमार, अयमस्मि ।

भरतः- क्व तत्रभवान् ममार्यो रामः । क्वासौ महाराजस्य प्रतिनिधिः । क्व मन्त्रिदर्शनं भारवताम् । क्वासौ प्रत्यादेशो राज्यलुब्धायाः कैकेय्याः । क्व तत् पात्रं यशसः । क्वासौ नरपतेः पुत्रः । क्वासौ सत्यमनुव्रतः ।

मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता ।
तमहं द्रष्टुमिच्छामि दैवतं परमं मम ॥ ३ ॥

सुमन्त्रः–कुमार ! एतस्मिन्नाश्रमपदे ।

अत्र रामश्च सीता च लक्ष्मणश्च महायशाः ।
सत्यं शीलं च भक्तिश्च येषु विग्रहवत् स्थिता ॥ ४ ॥

भरतः–तेन हि स्थाप्यतां रथः ।

सूतः–यदाज्ञापयत्यायुष्मान् । ( तथा करोति )

भरतः–( रथादवतीर्य । ) सूत ! एकान्ते विश्रामयाश्वान् ।

सूतः–यदाज्ञापयत्यायुष्मान् । ( निष्क्रान्तः । )

भरतः–भोस्तात ! निवेद्यतां निवेद्यताम् ।

सुमन्त्रः–कुमार ! किमिति निवेद्यते ।

भरतः–राज्यलुब्धायाः कैकेय्याः पुत्रो भरतः प्राप्त इति ।

सुमन्त्रः–कुमार ! अलं गुरुजनापवादमभिधातुम् ।

भरतः–सुष्ठु, न न्याय्यं परदोषमभिधातुम् । तेन उच्यतामिक्ष्वाकुकुलव्यङ्गभूतो भरतो दर्शनमभिलषतीति ।

सुमन्त्रः–कुमार ! नाहमेवं वक्तुं समर्थः । अथ पुनर्भरतः प्राप्त इति ब्रूयाम् ।

भरतः–न न । नाम केवलमभिधीयमानमकृतप्रायश्चित्तमिव मे प्रतिभाति । किं ब्रह्मघ्नानामपि परेण निवेदनं क्रियते । तस्मात् तिष्ठतु तातः । अहमेव निवेदयिष्ये । भो भोः ! निवेद्यतां निवेद्यतां तत्रभवते पितृवचनकराय राघवाय––

निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः ।
भक्तिमानागतः कश्चित् कथं तिष्ठतु यात्विति ॥ ५ ॥

( ततः प्रविशति रामः सीतालक्ष्मणाभ्याम् । )

रामः–( आकर्ण्य सहर्षम् । ) सौमित्रे ! किं शृणोषि ! अयि विदेहराजपुत्रि ! त्वमपि शृणोषि ।

कस्यासौ सदृशतरः स्वरः पितुर्मे
गाम्भीर्यात् परिभवतीव मेघनादम् ।
यः कुर्वन् मम हृदयस्य बन्धुशङ्कां
सस्नेहः श्रुतिपथमिष्टतः प्रविष्टः ॥ ६ ॥

लक्ष्मणः–आर्य ! ममापि खल्वेष स्वरसंयोगो बन्धुजनबहुमानमावहति । एष हि,

घनः स्पष्टो धीरः समदवृषभस्निग्धमधुरः
कलः कण्ठे वक्षस्यनुपहतसञ्चाररभसः ।
यथास्थानं प्राप्य स्फुटकरणनानाक्षरतया
चतुर्णां वर्णानामभयमिव दातुं व्यवसितः ॥ ७ ॥

रामः–सर्वथा नायमबान्धवस्य स्वरसंयोगः । क्लेदयतीव मे हृदयम् । वत्स लक्ष्मण ! दृश्यतां तावत् ।

३ लक्ष्मणः–यदाज्ञापयत्यार्यः । (परिक्रामति ।)

भरतः–अये कथं न कश्चित् प्रतिवचनं प्रयच्छति । किन्तु खलु विज्ञातोऽस्मि कैकेय्याः पुत्रो भरतः प्राप्त इति ।

६ लक्ष्मणः–(विलोक्य) अये अयमार्यो रामः । न न । रूपसादृश्यम् ।

मुखमनुपमं त्वार्यस्याभं शशाङ्कमनोहरं
मम पितृसमं पीनं वक्षः सुरारिशरक्षतम् ।
द्युतिपरिवृतस्तेजोराशिर्जगत्प्रियदर्शनो
नरपतिरयं देवेन्द्रो वा स्वयं मधुसूदनः ॥ ८ ॥

(सुमन्त्रं दृष्ट्वा ।) अये तातः ।

सुमन्त्रः–अये कुमारो लक्ष्मणः ।

३ भरतः–एवं, गुरुरयम् । आर्य, अभिवादये ।

लक्ष्मणः–एह्येहि । आयुष्मान् भव । (सुमन्त्रं वीक्ष्य ।) तात ! कोऽत्रभवान् ।

६ सुमन्त्रः—कुमार !

रघोश्चतुर्थोऽयमजात् तृतीयः पितुः प्रकाशस्य तव द्वितीयः ।
यस्यानुजस्त्वं स्वकुलस्य केतोस्तस्यानुजोऽयं भरतः कुमारः ॥ ९ ॥

लक्ष्मण.—एह्येहीक्ष्वाकुकुमार ! स्वस्त्यायुष्मान् भव ।

असुरसमरदक्षैर्वज्रसंघृष्टचापै—
रनुपमबलवीर्यैः स्वैः कुलैस्तुल्यवीर्यैः ।
रघुरिव स नरेन्द्रो यज्ञविश्रान्तकोशो
भव जगति गुणानां भाजनं भ्राजितानाम् ॥ १० ॥

भरत.—अनुगृहीतोऽस्मि ।

लक्ष्मणः—कुमार ! इह तिष्ठ । त्वदागमनमार्याय निवेदयामि ।

३ भरतः—आर्य ! अचिरमिदानीमभिवादयितुमिच्छामि । शीघ्रं निवेद्यताम् ।

लक्ष्मण.—बाढम् । ( उपेत्य । ) जयत्वार्यः । आर्य !

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः ।
संक्रान्तं यत्र ते रूपमादर्श इव तिष्ठति ॥ ११ ॥

राम.—वत्स लक्ष्मण ! किमेवं भरतः प्राप्तः ।

लक्ष्मणः— आर्य ! अथ किम् ।

१ राम.— मैथिलि ! भरतावलोकनार्थं विशालीक्रियतां ते चक्षुः ।

सीता—अय्यउत्त ! किं भरदो आअदो । [ आर्यपुत्र ! किं भरत आगतः । ]

६ राम.—मैथिलि ! अथ किम् ।

अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम् ।
कीदृशस्तनयस्नेहो भ्रातृस्नेहोऽयमीदृशः ॥ १२ ॥

लक्ष्मण.—आर्य ! किं प्रविशतु कुमारः ।

रामः—वत्स लक्ष्मण ! इदमपि तावदात्माभिप्रायमनुवर्तयितुमिच्छसि।
गच्छ सत्कृत्य शीघ्रं प्रवेश्यतां कुमारः ।

लक्ष्मणः—यदाज्ञापयत्यार्यः ।

रामः—अथवा तिष्ठ त्वम् ।

इयं स्वयं गच्छतु मानहेतोर्मातेव भावं तनये निवेद्य ।
तुषारपूर्णोत्पलपत्रनेत्रा हर्षास्रमासारमिवोत्सृजन्ती ॥ १३ ॥

सीता—जं अय्यउत्तो आणवेदि । ( उत्थाय परिक्रम्य भरतमवलोक्य । ) हं तदो तं वेळं दाणि णिक्कन्तो अय्यउत्तो । णहि णहि । रुवसादिस्सं । [ यदार्यपुत्र आज्ञापयति । हं ततस्ता वेलामिदानीं निष्क्रान्त आर्यपुत्रः । न हि न हि । रूपसादृश्यम् । ]

सुमन्त्रः—अये वधूः ।

भरतः—अये इयमत्रभवती जनकराजपुत्री ।

इदं तत् स्त्रीमयं तेजो जातं क्षेत्रोदराद्धलात् ।
जनकस्य नृपेन्द्रस्य तपसः सन्निदर्शनम् ॥ १४ ॥

आर्ये ! अभिवादये भरतोऽहमस्मि ।

सीता— ( आत्मगतम् । ) णहि रूवं एव्व । सरजोओ वि सो एव्व । ( प्रकाशम् । ) वच्छ ! चिरं जीव । [ नहि रूपमेव । स्वरयोगोऽपि स एव । वत्स ! चिरं जीव । ]

भरतः—अनुगृहीतोऽस्मि ।

सीता—एहि वच्छ । भादुमणोरहं पूरेहि । [ एहि वत्स ! भ्रातृमनोरथं पूरय । ]

सुमन्त्रः—प्रविशतु कुमारः ।

भरतः—तात ! इदानीं किं करिष्यसि ।

सुमन्त्रः–

अहं पश्चान् प्रवेक्ष्यामि स्वर्गं याते नराधिपे ।
विदितार्थस्य रामस्य ममैतत् पूर्वदर्शनम् ॥ १५ ॥

भरतः–एवमस्तु । ( राममुपगम्य ) आर्य ! अभिवादये भरतोऽहमस्मि ।

रामः–( सहर्षम् ) एह्येहि, इक्ष्वाकुकुमार ! स्वस्ति, आयुष्मान् भव ।
वक्षः प्रसार्य कवाटपुटप्रमाणमालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥

भरतः–अनुगृहीतोऽस्मि ।

सुमन्त्रः–( उपेत्य । ) जयत्वायुष्मान् ।

रामः–हा तात !

गत्वा पूर्वं स्वसैन्यैरभिमरिसमये खं समानैर्विमानै–
विख्यातो यो विमर्दे स स इति बहुशः सासुराणां सुराणाम् ।
स श्रीमांस्त्यक्तदेहो दयितमपि विना स्नेहवन्तं भवन्तं
स्वर्गस्थः साम्प्रतं किं रमयति पितृभिः स्वैर्नरेन्द्रैर्नरेन्द्रः ॥१७॥

सुमन्त्रः–( सशोकम् )

नरपतिनिधनं भवत्प्रवासं भरतविषादमनाथतां कुलस्य ।
बहुविधमनुभूय दुष्प्रसह्यं गुण इव बद्धपराद्धमायुषा मे ॥१८॥

सीता–रोदन्तं अय्यउत्तं पुणो वि रोदावीअदि तादो । [ रुदन्तमार्यपुत्रं पुनरपि रोदयति तातः । ]

रामः–मैथिलि ! एष पर्यवस्थापयाम्यात्मानम् । वत्स ! लक्ष्मण ! आपस्तावत् ।

लक्ष्मणः–यदाज्ञापयत्यार्यः ।

भरतः–आर्य ! न खलु न्याय्यम् । क्रमेण शुश्रूषयिष्ये । अहमेव

यास्यामि । ( कलशं गृहीत्वा निष्क्रम्य प्रविश्य । ) इमा आपः ।

रामः– आचम्य । मैथिलि ! विशीर्यते खलु लक्ष्मणस्य व्यापारः ।

१ सीता-अय्यउत्त ! णं एदिणा पि सुस्सूसइदव्वो । [ आर्यपुत्र ! नन्वेतेनापि शुश्रूषयितव्यः । ]

रामः–सुष्ठु खल्विह लक्ष्मणः शुश्रूषयतु । तत्रस्थो मां भरतः

१२ शुश्रूषयतु ।

भरतः–प्रसीदत्वार्यः ।

इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा ।
नाम्नैव भवतो राज्यं कृतरक्षं भविष्यति ॥ १९ ॥

रामः–वत्स ! कैकेयीमातः ! मा मैवम् ।

पितुर्नियोगादहमागतो वनं
न वत्स ! दर्पान्न भयान्न विभ्रमात् ।
कुलं च नः सत्यधनं ब्रवीमि ते
कथं भवान् नीचपथे प्रवर्तते ॥ २० ॥

सुमन्त्रः–अथेदानीमभिषेकोदकं क्व तिष्ठतु ।

रामः–यत्र मे मात्राभिहितं, तत्रैव तावत् तिष्ठतु ।

३ भरतः–प्रसीदत्वार्यः । आर्य ! अलमिदानीं व्रणे प्रहर्तुम् ।

अपि सुगुण ! ममापि त्वत्प्रसूतिः प्रसूतिः
स खलु निभृतधीमांस्ते पिता मे पिता च ।
सुपुरुष ! पुरुषाणां मातृदोषो न दोषो
वरद ! भरतमार्तं पश्य तावद् यथावत् ॥ २१ ॥

सीता–अय्यउत्त ! अदिकरुणं मन्तेइ भरदो । किं दाणिं अय्यउत्तेण चिन्तीअदि । [ आर्यपुत्र ! अतिकरुणं मन्त्रयते भरतः । १ किमिदानीमार्यपुत्रेण चिन्त्यते । ]

रामः–मैथिलि !

तं चिन्तयामि नृपतिं सुरलोकयातं
येनायमात्मजविशिष्टगुणो न दृष्टः ।
ईदृग्विधं गुणनिधिं समवाप्य लोके
धिग् भो ! विधेर्यदि बलं पुरुषोत्तमेषु ॥ २२ ॥

वत्स ! कैकेयीमातः ।

यत्सत्यं परितोषितोऽस्मि भवता निष्कल्मषात्मा भवां-
स्त्वद्वाग्न्यस्य वशानुगोऽस्मि भवतः ख्यातैर्गुणैर्निर्जितः ।
किन्त्वेतन्नृपतेर्वचस्तदनृतं कर्तुं न युक्तं त्वया
किञ्चोत्पाद्य भवद्विधं भवतु ते मिथ्याभिधायी पिता ॥२३॥

भरत.—

यावद् भविष्यति भवन्नियमावसानं
तावद् भवेयमिह ते नृप ! पादमूले ।

रामः—

मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
मे शापितो न परिरक्षसि चेत् स्वराज्यम् ॥ २४ ॥

भरतः—हन्त ! अनुत्तरमभिहितम् । भवतु समयवस्ते राज्यं परिपालयामि ।

रामः—वत्स ! कः समयः ।

भरत.—मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते प्रतिग्रहीतुमिच्छामि ।

राम.—एवमस्तु ।

भरतः—आर्य ! श्रुतम् ! आर्ये श्रुतम् । तात श्रुतम् ।

सर्वे—वयमपि श्रोतारः ।

भरतः—आर्य ! अन्यमपि वरं हर्तुमिच्छामि ।

रामः—वत्स ! किमिच्छसि । किमहं ददामि । किमहमनुष्ठास्यामि ।

भरतः—

पादोपभुक्ते तव पादुके मे एते प्रयच्छ प्रणताय मूर्ध्ना ।
यावद् भवानेष्यति कार्यसिद्धिं तावत् भविष्याम्यनयोर्विधेयः ॥२५॥

रामः—( स्वगतम् ) हन्त भोः !

सुचिरेणापि कालेन यशः किञ्चिन्मयार्जितम् ।
अचिरेणैव कालेन भरतेनाद्य सञ्चितम् ॥ २६ ॥

सीता—अय्यउत्त ! णं दीयदि खु पुढमजाअणं भरदस्स । [ आर्यपुत्र ! ननु दीयते खलु प्रथमयाचनं भरताय । ]

रामः— तथास्तु । वत्स ! गृह्यताम् । ( पादुके अर्पयति । )

भरतः—अनुगृहीतोऽस्मि । ( गृहीत्वा ) आर्य ! अत्राभिषेकोदकमावर्जयितुमिच्छामि ।

रामः—तात ! यदिष्टं भरतस्य तत् सर्वं क्रियताम् ।

सुमन्त्रः—यदाज्ञापयत्यायुष्मान् ।

भरतः—( आत्मगतम् ) हन्त भोः,

श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः ।
भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद् भाजनं
संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥ २७ ॥

रामः—वत्स कैकेयीमातः ! राज्यं नाम मुहूर्तमपि नोपेक्षणीयम् । तस्मादद्यैव विजयाय प्रतिनिवर्ततां कुमारः ।

सीता—हं अज्ज एव्व गमिस्सदि कुमारो भरदो । [ हम् अद्यैव गमिष्यति कुमारो भरतः । ]

रामः—अलमतिस्नेहेन । अद्यैव विजयाय प्रतिनिवर्ततां कुमारः ।

भरतः—आर्य । अद्यैवाहं गमिष्यामि ।

आशावन्तः पुरे पौराः स्थास्यन्ति त्वद्दिदृक्षया।
तेषां प्रीतिं करिष्यामि स्वत्प्रसादस्य दर्शनात्॥ २८ ॥

सुमन्त्र –आयुष्मन् ! मयेदानीं किं कर्तव्यम्।

राम –तात ! महाराजवत् परिपाल्यतां कुमारः।

३ सुमन्त्र.–यदि जीवामि, तावत् प्रयतिष्ये।

रामः–वत्स कैकेयीमातः ! आरुह्यतां ममाग्रतो रथः।

भरत.–यदाज्ञापयत्यार्यः। ( रथमारोहत.। )

६ राम –मैथिलि ! इतस्तावत्। वत्स लक्ष्मण ! इतस्तावत्।
आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं भविष्यामः।

( इति निष्क्रान्ता• सर्वे। )

## चतुर्थोऽङ्कः।

---

## अथ पञ्चमोऽङ्कः।

( ततः प्रविशति सीता तापसी च। )

३ सीता–अय्ये। उवहारसुमणाइण्णो सम्मज्जिदो अस्समो। अस्सम-
पदविभवेण अणुट्ठिओ देवसमुदाआरो। ता जाव अय्यउत्तो ण
आअच्छदि दाव इमाणं बालरुक्खाणं उदअप्पदाणेण अणुक्को-
६ सइस्सं। [ आर्ये ! उपाहारसुमनआकीर्णः संमार्जित आश्रमः।
आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः। तद् यावदार्यपुत्रो नाग-
च्छति, तावदिमान् बालवृक्षानुदकप्रदानेनानुक्रोशयिष्यामि। ]

९ तापसी–अविग्घं से होदुं। [ अविघ्नमस्य भवतु। ]
राम – ( सशोकम्। )

त्यक्त्वा तां गुरुणा मया च रहितां रम्यामयोध्यां पुरी-
मुद्यम्यापि ममाभिषेकमखिलं मत्सन्निधावागतः ।
रक्षार्थं भरतः पुनर्गुणनिधिस्तत्रैव सम्प्रेषितः
कष्टं भो नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥ १ ॥

( विमृश्य ) ईदृशमेवैतत् । यावदिदानीमीदृशशोकविनोदनार्थमवस्थाकुटुम्बिनीं मैथिलीं पश्यामि । तत् क नु खलु गता वैदेही ।
३ ( परिक्रम्यावलोक्य ) अये इमानि खलु प्रत्यग्राभिषिक्तानि वृक्षमूलानि अदूरगतां मैथिलीं सूचयन्ति । तथाहि,

भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः ।
स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलक्षयरेखया ॥ २ ॥

( विलोक्य । ) अये इयं वैदेही । भोः । कष्टम् ।

योऽस्याः करः श्राम्यति दर्पणेऽपि
स नैति खेदं कलशं वहन्त्याः ।
कष्टं वनं स्त्रीजनसौकुमार्यं
समं लताभिः कठिनीकरोति ॥ ३ ॥

( उपेत्य ) मैथिलि । अपि तपो वर्धते ।

सीता–हं अय्यउत्तो । जेदु अय्यउत्तो । [ हम् आर्यपुत्रः । जय-
३ त्वार्यपुत्रः । ]

रामः–मैथिलि ! यदि ते नास्ति धर्मविघ्नः, आस्यताम् ।

सीता–जं अय्यउत्तो आणवेदि । ( उपविशति । ) [ यदार्यपुत्र
६ आज्ञापयति । ]

रामः–मैथिलि । प्रतिवचनार्थिनीमिव त्वां पश्यामि । किमिदम् ।

सीता—सोअसुण्णहिअअस्स विअ अय्यउत्तस्स मुहराओ । किं
१ एदं । [ शोकशून्यहृदयस्येवार्यपुत्रस्य मुखराग. । किमेतत् । ]

रामः—मैथिलि ! स्थाने खलु कृता चिन्ता ।

कृतान्तशल्याभिहते शरीरे तथैव तावद्हृदयव्रणो मे ।
नानाफलाः शोकशराभिघातास्तत्रैव तत्रैव पुन पतन्ति ॥ ४ ॥

सीता—अय्यउत्तस्स को विअ सन्दावो । [ आर्यपुत्रस्य क इव सन्ताप· । ]

३ रामः—श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधि. । कल्पविशेषेण निवपनक्रियामिच्छन्ति पितरः । तत् कथं निर्वर्तयिष्यामीत्येतच्चिन्त्यते । अथवा ।

गच्छन्ति तुष्टिं खलु येन केन त एव जानन्ति हि तां दशां मे ।
इच्छामि पूजां च तथापि कर्तुं तातस्य रामस्य च सानुरूपाम् ॥५॥

सीता—अय्यउत्त ! णिव्वत्तइस्सिदि सद्धं भरदो रिद्धीए, अवत्थाणुरूवं फलोदएण वि अय्यउत्तो । एदं तादस्स बहुमदअरं भवि
२ स्सदि । [ आर्यपुत्र ! निर्वर्तयिष्यति श्राद्ध भरत ऋद्ध्या, अवस्थानुरूपं फलोदकेनाप्यार्यपुत्र. । एतत् तातस्य बहुमततरं भविष्यति । ]

राम.—मैथिलि !

फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि न. ।
स्मारितो वनवासं च तातस्तत्रापि रोदिति ॥ ६ ॥

( तत. प्रविशति परिव्राजकवेषो रावण. । )

रावण.—एष भो. !

नियतमनियतात्मा रूपमेतद् गृहीत्वा
खरवधकृतवैरं राघवं वञ्चयित्वा ।
स्वरपदपरिहीणां हव्यधारामिवाहं
जनकनृपसुतां तां हर्तुकाम· प्रयामि ॥ ७ ॥

( परिक्रम्याधो विलोक्य ) इदं रामस्याश्रमपदद्वारम् । ( यावदवतरामि ) ( अवतरति । ) यावदहमप्यतिथिसमुदाचारमनुष्ठास्यामि । अहमतिथि: । कोऽत्र भो: ! ।

राम:–( श्रुत्वा । ) स्वागतमतिथये !

रावण:–साधु विशेषितं खलु रूपं स्वरेण ।

राम:–( विलोक्य ) । अये भगवान् । भगवन् । अभिवादये ।

रावण:–स्वस्ति ।

राम:–भगवन् ! एतदासनमास्यताम् ।

रावण:–( आत्मगतम् । ) कथमाज्ञप्त इवास्म्यनेन । ( प्रकाशम् ) बाढम् । ( ( उपविशति । )

राम:–मैथिलि ! पाद्यमानय भगवते ।

सीता–जं अय्यउत्तो आणवेदि । ( निष्क्रम्य प्रविश्य । ) इमा आवो ।
[ यदार्यपुत्र आज्ञापयति । इमा आप: । ]

राम:–शुश्रूषय भगवन्तम् ।

सीता-जं अय्यउत्तो आणवेदि । [ यदार्यपुत्र आज्ञापयति । ]

रावण.–( मायाप्रकाशनपर्याकुलो भूत्वा ) भवतु, भवतु,

इयमेका पृथिव्यां हि मानुषीणामरुन्धती ।
यस्या भर्तेति नारीभि: सत्कृत: कथ्यते भवान् ॥ ८ ॥

राम:–तेन हि आनय, अहमेव शुश्रूषयिष्ये ।

रावण -अयि छायां परिहृत्य शरीरं न लङ्घयामि । वाचानुवृत्ति: खल्वतिथिसत्कार: । पूजितोऽस्मि । आस्यताम् ।

राम:–बाढम् । ( उपविशति । )

रावण:–( आत्मगतम् । ) यावदहमपि ब्राह्मणसमुदाचारमनुष्ठास्यामि । ( प्रकाशम् ) भो: ! काश्यपगोत्रोऽस्मि । साङ्गोपाङ्गं वेदमधीये मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च ।

रामः—कथं कथं श्राद्धकल्पमिति ।

रावणः—सर्वाः श्रुतीरतिक्रम्य श्राद्धकल्पे स्पृहा दर्शिता । किमेतत् ।

रामः—भगवन् ! भ्रष्टायां पितृमत्तायामागम इदानीमेषः ।

रावणः—अलं परिहृत्य । पृच्छतु भवान् ।

रामः—भगवन् ! निवपनक्रियाकाले केन पितॄंस्तर्पयामि ।

रावणः—सर्वं श्रद्धया दत्तं श्राद्धम् ।

रामः—भगवन् ! अनादरतः परित्यक्तं भवति । विशेषार्थं पृच्छामि ।

रावणः—श्रूयताम् । विरूढेषु दर्भाः, ओषधीषु तिलाः, कलायं शाकेषु, मत्स्येषु महाशफरः, पक्षिषु वार्ध्रीणसः, पशुषु गौः खड्गो वा, इत्येते मानुषाणां विहिता ।

रामः—भगवन् ! वाशब्देनावगतमन्यदप्यस्तीति ।

रावणः—अस्ति प्रभावसम्पाद्यम् ।

रामः—भगवन् ! एष एव मे निश्चयः ।

उभयमप्यस्ति सान्निध्यं यद्येतत् साधयिष्यति ।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः ॥ ९ ॥

रावण—सन्ति । हिमवति प्रतिवसन्ति ।

रामः—हिमवतीति । ततस्ततः ।

रावणः—हिमवतः सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैदूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम मृगाः, यैर्वैखानसवालखिल्यनैमिशीयादयो महर्षयश्चिन्तितमात्रोपस्थितविपन्नैः श्राद्धान्यभिवर्धयन्ति ।

तैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां समुपयान्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिमिश्च विपर्ययैर्न बलाद्भ्रियन्ते ॥ १० ॥

रामः- मैथिलि !

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्यं वनं तव सखीर्दयिता लताश्च ॥
वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवौषधिवनैरुपरञ्जितेषु ॥ ११ ॥

सीता-जं अय्यउत्तो आणवेदि । [ यदार्यपुत्र आज्ञापयति । ]

रावणः-कौसल्यामातः ! अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्ते ।

३ रामः-भगवन् ! किं हिमवति प्रतिवसन्ति ।

रावणः-अथ किम् ।

रामः-तेन हि पश्यतु भवान् ।

सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति ।
भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति ॥ १२ ॥

रावणः-( स्वगतम् । ) अहो असह्यः खल्वस्यावलेपः ।

रामः- ( दिशो विलोक्य । ) अये विद्युत्सम्पात इव दृश्यते ।

३ रावणः-( प्रकाशम् । ) कौसल्यामातः । इहस्थमेव भवन्तं पूजयति हिमवान् । एष काञ्चनपार्श्वः ।

रामः-भगवतो वृद्धिरेषा ।

६ सीता-दिट्ठिआ अय्यउत्तो वड्ढइ । [ दिष्ट्यार्यपुत्रो वर्धते । ]

रामः-न न,

तातस्यैतानि भाग्यानि यदि स्वयमिहागतः ।
अर्हत्येष हि पूजायां लक्ष्मणं ब्रूहि मैथिलि ॥ १३ ॥

सीता-अय्यउत्त ! णं तित्थअत्तादो उवावत्तमाणं कुलवदिं पच्चुग्गच्छेहित्ति सन्दिट्ठो सोमित्ती । [ आर्यपुत्र ! ननु तीर्थयात्रात
१ उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति सन्दिष्टः सौमित्रिः । ]

रामः–तेन हि अहमेव यास्यामि ।

सीता–अय्यउत्त ! अहं किं करिस्सं । [ आर्यपुत्र ! अहं किं
६ करिष्यामि । ]

रामः–शुश्रूषयस्व भगवन्तम् ।

सीता–जं अय्यउत्तो आणवेदि । [ यदार्यपुत्र आज्ञापयति । ]

९　　( निष्क्रान्तो रामः । )

रावणः–अये, अयमर्घ्यमादायोपसर्पति राघवः । एष इदानीं पूजामनवेक्ष्य धावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः ।

अहो बलमहो वीर्यमहो सत्त्वमहो जवः ।
राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥ १४ ॥

एष मृगः । एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः ।

सीता–( आत्मगतम् । ) अय्यउत्तविरहिदाए भअं मे एत्थ उप्पज्जइ ।
३ [ आर्यपुत्रविरहिताया भयं मेऽत्रोत्पद्यते । ]

रावणः–( आत्मगतम् । )

माययापहृते रामे सीतामेकां तपोवनात् ।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् ॥ १५ ॥

सीता–जाव उडजं पविसामि । (गन्तुमीहते) [ यावदुटजं प्रविशामि । ]

रावणः–( स्वरूपं गृहीत्वा । ) सीते ! तिष्ठ तिष्ठ ।

३ सीता–( सभयम् । ) हं को दाणि अअं । [ ह क इदानीमयम् । ]

रावणः–किं न जानीषे ।

युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिता
दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ ।
दर्पाद् दुर्मतिमप्रमेयबलिनं रामं विलोभ्य च्छलैः
स त्वां हर्तुमना विशालनयने ! प्राप्तोऽस्म्यहं रावणः ॥१६॥

सीता–हं रावणो णाम । ( प्रतिष्ठते । ) [ ह रावणो नाम । ]

रावणः—आः, रावणस्य चक्षुर्विषयमागता क यास्यसि ।

सीता—अय्यउत्त ! परित्ताआहि परित्ताआहि । सोमित्ती ! परित्ताआहि परित्ताआहि मं । [ आर्यपुत्र ! परित्रायस्व परित्रायस्व । सौमित्रे ! परित्रायस्व परित्रायस्व माम् । ]

रावणः—सीते ! श्रूयतां मत्पराक्रमः ।

भग्नः शक्रः कम्पितो वित्तनाथः क्रुष्टः सोमो मर्दितः सूर्यपुत्रः ।
धिग् भोः स्वर्गं भीतदेवैर्निविष्टं धन्या भूमिर्वर्तते यत्र सीता ॥१७॥

सीता—अय्यउत्त ! परित्ताआहि परित्ताआहि । सोमित्ती ! परित्ताआहि परित्ताआहि मं । [ आर्यपुत्र ! परित्रायस्व परित्रायस्व । सौमित्रे ! परित्रायस्व परित्रायस्व माम् । ]

रावणः—

रामं वा शरणमुपेहि लक्ष्मणं वा
स्वर्गस्थं दशरथमेव वा नरेन्द्रम् ।
किं वा स्यात् कुपुरुषसंश्रितैर्वचोभि-
र्न व्याघ्रं मृगशिशवः प्रधर्षयन्ति ॥ १८ ॥

सीता—अय्यउत्त ! परित्ताआहि परित्ताआहि । सोमित्ती ! परित्ताआहि परित्ताआहि मं । [ आर्यपुत्र ! परित्रायस्व परित्रायस्व । सौमित्रे ! परित्रायस्व परित्रायस्व माम् । ]

रावणः—

विलपसि किमिदं विशालनेत्रे
विगणय मां च यथा तवार्यपुत्रम् ।
विपुलबलयुतो ममैष योद्धुं
ससुरगणोऽप्यसमर्थ एव रामः ॥ १९ ॥

सीता—( सरोषं ) सत्तो सि । [ शप्तोऽसि । ]

रावणः—हृहृह ! अहो पतिव्रतायास्तेजः ।

योऽहमुत्पतितो वेगान्न दग्धः सूर्यरश्मिभिः ।
अस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः ॥ २० ॥

सीता–अय्यउत्त ! परित्ताआहि परित्ताआहि । [ आर्यपुत्र ! परित्रायस्व परित्रायस्व । ]

३ रावणः–( सीतां गृहीत्वा । ) भो भो जनस्थानवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

बलादेष दशग्रीवः सीतामादाय गच्छति ।
क्षात्रधर्मे यदि स्निग्धः कुर्याद् रामः पराक्रमम् ॥ २१ ॥

सीता–अय्यउत्त ! परित्ताआहि परित्ताआहि । [ आर्यपुत्र ! परित्रायस्व परित्रायस्व । ]

३ रावणः–( परिक्रामन् विलोक्य । ) अये स्वपक्षपवनोत्क्षेपक्षुभितवनषण्डश्चण्डचञ्चुरभिधावत्येष जटायुः । आः तिष्ठेदानीम् ।

मद्भुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरार्द्रगात्रं त्वां नयामि यमसादनम् ॥ २२ ॥

( निष्क्रान्तौ । )

पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

( ततः प्रविशतो वृद्धतापसौ । )

३ उभौ–परित्रायतां परित्रायतां भवन्तः !

प्रथमः–

इयं हि नीलोत्पलदामवर्चसा मृणालशुक्लोज्ज्वलदंष्ट्रहासिना ।
निशाचरेन्द्रेण निशार्धचारिणा मृगीव सीता परिभूय नीयते ॥१॥

द्वितीयः–एषा खलु तत्रभवती वैदेही

विचेष्टमानेव भुजङ्गमाङ्गना
विधूयमानेव च पुष्पिता लता ।
प्रसह्य पापेन दशाननेन सा
तपोवनात् सिद्धिरिवापनीयते ॥ २ ॥

उभौ–परित्रायतां परित्रायतां भवन्तः ! ।

प्रथमः- ( ऊर्ध्वमवलोक्य । ) अये वचनसमकाल एव दशरथस्यानृण्यं कर्तुं मयि स्थिते क्व यास्यसीति रावणमाहूयान्तरिक्षमुत्पतितो जटायुः ।

द्वितीयः–एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः ।

प्रथमः–एष रावणः ।

द्वितीयः–एष जटायुः ।

उभौ–हन्तैतदन्तरिक्षे प्रवृत्तं युद्धम् ।

प्रथमः–काश्यप ! काश्यप ! पश्य क्रव्यादीश्वरस्य सामर्थ्यम् ।

पक्षाभ्यां परिभूय वीर्यविषयं द्वन्द्वं प्रतिव्यूहते
तुण्डाभ्यां सुनिघृष्टतीक्ष्णमचलः संवेष्टनं चेष्टते ।
तीक्ष्णैरायसकण्टकैरिव नखैर्भीमान्तरं वक्षसो
वज्राग्रैरिव दार्यमाणविषमाच्छैलाच्छिला पाट्यते ॥३॥

द्वितीयः–हन्त संक्रुद्धेन रावणेनासिना क्रव्यादीश्वरः स दक्षिणांसदेशे हतः ।

उभौ–हा धिक् ! पतितोऽत्रभवान् जटायुः,

प्रथमः– भोः कष्टम् । एष खलु तत्रभवान् जटायुः,

कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा
दीप्तं निशाचरपतेरवधूय तेजो
नागेन्द्रभग्नवनवृक्ष इवावसन्नः ॥ ४ ॥

उभौ–स्वर्गोऽयमस्तु ।

प्रथमः–काश्यप ! आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयिष्यावः ।

द्वितीयः–बाढम् । प्रथमः कल्पः ।

( निष्क्रान्तौ । )

विष्कम्भकः ।

( ततः प्रविशति काञ्चुकीयः । )

काञ्चुकीयः– क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ।

( प्रविश्य )

प्रतिहारी–अय्य ! अहं विजया ! किं करीअदु । [ आर्य ! अहं विजया । किं क्रियताम् । ]

काञ्चुकीयः– विजये ! निवेद्यतां निवेद्यतां भरतकुमाराय–एष खलु रामदर्शनार्थं जनस्थानं प्रस्थितः प्रतिनिवृत्तस्तत्रभवान् इति ।

प्रतिहारी–अय्य ! अवि किदत्थो तादसुमन्तो आअदो । [ आर्य ! अपि कृतार्थस्तातसुमन्त्र आगतः । ]

काञ्चुकीयः–भवति ! न जाने ।

हृदयस्थितशोकाग्निशोषितेवाननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥ ५ ॥

प्रतिहारी–अय्य ! एदं सुणिअ पय्याउलं विअ मे हिअअं । [ आर्य ! एतच्छ्रुत्वा पर्याकुलमिव मे हृदयम् । ]

काञ्चुकीयः–भवति ! किमिदानीं स्थिता । शीघ्रं निवेद्यताम् ।

प्रतिहारी–अय्य ! इअं णिवेदेमि । ( निष्क्रान्ता । ) [ आर्य ! इयं निवेदयामि । ]

काञ्चुकीयः–( विलोक्य । ) अये ! अयमत्रभवान् भरतकुमारः सुमन्त्रागमनजनितकुतूहलहृदयश्चीरवल्कलवसनश्चित्रजटापुञ्जपिञ्जरितोत्तमाङ्ग इत एवाभिवर्तते । य एषः,

प्रख्यातसद्गुणगणः प्रतिपक्षकाल-
स्तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः ।
आज्ञावशादखिलभूपरिरक्षणस्थः
श्रीमानुदारकल्पैमसमानयानः ॥ ६ ॥

( ततः प्रविशति भरतः प्रतिहारी च । )

भरतः–विजये ! एवम् , उपगस्तत्रभवान् सुमन्त्रः ।

गत्वा तु पूर्वमयमार्यनिरीक्षणार्थं
लब्धप्रसादशपथे मयि सन्निवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनबुद्धिमनोभिरामम् ॥ ७ ॥

काञ्चुकीयः– ( उपगम्य । ) जयतु कुमारः ।

भरतः–अथ कस्मिन् प्रदेशे वर्तते तत्रभवान् सुमन्त्रः ।

काञ्चुकीयः–असौ काञ्चनतोरणद्वारे ।

भरतः–तेन हि शीघ्रं प्रवेश्यताम् ।

काञ्चुकीयः–यदाज्ञापयति कुमारः । ( निष्क्रान्तः । )

( ततः प्रविशति सुमन्त्रः प्रतिहारी च । )

सुमन्त्रः–( सशोकम् ) कष्टं भोः ! कष्टम् ।

नरपतिनिधनं मयानुभूतं नृपतिसुतव्यसनं मयैव दृष्टम् ।
श्रुत इह स च मैथिलीप्रणाशो गुण इव बहुपराद्धमायुषा मे ॥ ८ ॥

प्रतिहारी–( सुमन्त्रमुद्दिश्य । ) एदु एदु अय्यो । एसो भट्टा । उवसप्पदु अय्यो । [ एत्वेत्वार्यः । एष भर्ता । उपसर्पत्वार्यः । ]

सुमन्त्रः– ( उपगत्य । ) जयतु कुमारः ।

भरतः–तात ! अपि दृष्टस्त्वया लोकाविष्कृतपितृस्नेहः । अपि दृष्टं द्विधाभूतमरुन्धतीचारित्रम् । अपि दृष्टं त्वया निष्कारणावहितवनवासं सौभ्रात्रम् ।

( सुमन्त्र सचिन्तस्तिष्ठति । )

प्रतिहारी–भट्टिदारओ खु अय्य पुच्छदि । [ भर्तृदारक खल्वार्यं पृच्छति । ]

सुमन्त्र –भवति किं माम् ।

भरत –( स्वगतम् । ) अतिमहान् खल्वायास । सन्तापाद् भ्रष्टहृदय । ( प्रकाशम् । ) अपि मार्गात् प्रतिनिवृत्तस्तत्रभवान् ।

सुमन्त्र –कुमार ! त्वन्नियोगाद् रामदर्शनार्थं जनस्थान प्रस्थित कथमहमन्तरा प्रतिनिवर्तिष्ये ।

भरत –किन्तु खलु क्रोधेन वा लज्जया वात्मान न दर्शयन्ति ।

सुमन्त्र –कुमार !

श्रुत क्रोधो विनीताना लज्जा वा कृतचेतसाम् ।
मया दृष्ट तु तच्छून्य तैर्विहीन तपोवनम् ॥ ९ ॥

भरत –अथ क गता इति श्रुता ।

सुमन्त्र –अस्ति किल किष्किन्धा नाम वनौकसा निवास । तत्र गता इति श्रुता ।

भरत –हन्त ! अविज्ञातपुरुषविशेषा खलु वानरा । दु खिता प्रतिवसन्ति ।

सुमन्त्र –कुमार ! तिर्यग्योनयोऽप्युपकृतमवगच्छन्ति ।

भरत –तात ! कथमिव ।

सुमन्त्र –

सुग्रीवो धर्षितो राज्याद् भ्रात्रा ज्येष्ठेन वालिना ।
हृतदारो वसञ्छैले तुल्यदु खेन मोक्षित ॥ १० ॥

भरत –तात ! कथ तुल्यदु खेन नाम ।

सुमन्त्र –(आत्मगतम् ।) हन्त सर्वमुक्तमेव मया । (प्रकाशम् ।) कुमार ! न खलु किञ्चित् । ऐश्वर्यभ्रशतुल्यता समाभिप्रेता ।

भरतः–तात ! किं गूहसे स्वर्गं गतेन महाराजपादमूलेन शापितः स्याः, यदि सत्यं न ब्रूयाः ।

सुमन्त्रः–का गतिः । श्रूयतां,

वैरं मुनिजनस्यार्थे रक्षसा महता कृतम् ।
सीता मायामुपाश्रित्य रावणेन ततो हृता ॥ ११ ॥

भरतः–कथं हृतेति । ( मोहमुपगतः । )

सुमन्त्रः–समाश्वसिहि समाश्वसिहि ।

भरतः–( पुनः समाश्वस्य । ) भोः ! कष्टम् ।

पित्रा च बान्धवजनेन च विप्रयुक्तो
दुःखं महत् समनुभूय वनप्रदेशे ।
भार्यावियोगमुपलभ्य पुनर्ममार्यो
जीमूतचन्द्र इव खे प्रभया वियुक्तः ॥ १२ ॥

भो ! किमिदानीं करिष्ये । भवतु, दृष्टम् । अनुगच्छतु मां तातः ।

सुमन्त्रः–यदाज्ञापयति कुमारः ।

( उभौ परिक्रामतः । )

सुमन्त्रः–कुमार ! न खलु न खलु गन्तव्यम् । देवीनां चतुःशालमिदम् ।

भरतः– अत्रैव मे कार्यम् । भोः ! क इह प्रतिहारे ।

( प्रविश्य । )

प्रतिहारी–जेदु भट्टिदारओ । विजआ क्खु अहं । [ जयतु भर्तृदारकः । विजया खल्वहम् । ]

भरतः–विजये ! ममागमनं निवेदयात्रभवत्यै ।

प्रतिहारी–कदमाए भट्टिणीए णिवेदेमि । [ कतमस्यै भट्टिन्यै निवेदयामि । ]

भरतः–या मां राजानमिच्छति ।

प्रतिहारी– ( आत्मगतम् । ) हं किं णु खु भवे ! ( प्रकाशम् । ) भट्टा ! तह । ( निष्क्रान्ता । ) [ ह किन्नु खलु भवेत् ! भर्तः । तथा । ]

( ततः प्रविशति कैकेयी प्रतिहारी च । )

कैकेयी–विजए ! म पेक्खिदुं भरदो आअदो । [ विजये ! मा प्रेक्षितु भरत आगत । ]

प्रतिहारी–भट्टिणि । तह । भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो । तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदुं इच्छदि किल । [ भट्टिनि ! तथा । भर्तृदारकस्य रामस्य सकाशात् तातसुमन्त्र आगत । तेन सह भर्तृदारको भरतो भट्टिनीं प्रेक्षितुमिच्छति किल । ]

कैकेयी–( स्वगतम् । ) केण खु उग्घादेण मं उवालम्भिस्सिदि भरदो । [ केन खलूद्घातेन मामुपालप्स्यते भरत । ]

प्रतिहारी–भट्टिणि ! किं पविसदु भट्टिदारओ । [ भट्टिनि ! किं प्रविशतु भर्तृदारक । ]

कैकेयी–गच्छ । पवेसेहि णं । [ गच्छ । प्रवेशयैनम् । ]

प्रतिहारी–भट्टिणि । तह । ( परिक्रम्योपसृत्य ) जेदु भट्टिदारओ । पविसदु किल । [ भट्टिनि ! तथा ! जयतु भर्तृदारक । प्रविशतु किल । ]

भरत –विजये ! किं निवेदितम् ।

प्रतिहारी–आम ।

भरत:– तेन हि प्रविशावः ।

( प्रविशत । )

कैकेयी–जाद । विअआ मन्तेदि–रामस्स सआसादो सुमन्तो आअदोत्ति । [ जात ! विजया मन्त्रयते––रामस्य सकाशात् सुमन्त्र आगत इति । ]

भरतः– अतः परं प्रियं निवेदयाम्यत्रभवत्यै ।

कैकेयी–जाद ! अवि कोसल्ला सुमित्ता अ सद्दावइदव्वा । [ जात ! अपि कौसल्या सुमित्रा च शब्दापयितव्ये । ]

भरतः–न खलु ताभ्यां श्रोतव्यम् ।

कैकेयी– ( आत्मगतम् । ) हं किं णु हु भवे । (प्रकाशम् ।) भणाहि जाद ! । [ हं किन्तु खलु भवेत् । भण जात ! । ]

भरतः– श्रूयतां,

यः स्वराज्यं परित्यज्य त्वन्नियोगाद् वनं गतः ।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥ १३ ॥

कैकेयी–हं ।

भरतः–

हन्त भोः ! सत्वयुक्तानामिक्ष्वाकूणां मनस्विनाम् ।
वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥ १४ ॥

कैकेयी–( आत्मगतम् । ) भोदु, दाणिं कालो कहेदुं । ( प्रकाशम् । ) जाद ! तुवं ण आणासि महाराअस्स सावं । [ भवतु, इदानीं कालः कथयितुम् । जात ! त्वं न जानासि महाराजस्य शापम् । ]

भरतः–किं शप्तो महाराजः ।

कैकेयी–सुमन्त ! आअक्ख वित्थरेण । [ सुमन्त्र ! आचक्ष्व विस्तरेण । ]

सुमन्त्रः–यदाज्ञापयति भवती । कुमार ! श्रूयताम्—पुरा मृगयां गतेन महाराजेन कस्मिंश्चित् सरसि कलशे पूर्यमाणे वनगजबृंहितानुकारिशब्दसमुत्पन्नवनगजशङ्कया शब्दवेधिना शरेण विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयो हिंसितः ।

भरतः–हिंसित इति । शान्तं पापं शान्तं पापम् । ततस्ततः ।

सुमन्त्रः–ततस्तमेवंगतं दृष्ट्वा,

तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा ।
यथाहं भोस्त्वमप्येवं पुत्रशोकाद् विपत्स्यसे ॥ १५ ॥

इति ।

भरत —नन्विदं कष्टं नाम ।

कैकेयी—जाद ! एदण्णिमित्तं अवराहे मं णिक्खिविअ पुत्तओ रामो वणं पेसिदो, ण हु रज्जलोहेण । अपरिहरणीओ महरिसिसावो पुत्तविप्पवासं विणा ण होइ । [ जात ! एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः, न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति । ]

भरत —अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेषितः ।

कैकेयी—जाद ! मादुलकुले वत्तमाणस्स पइदीहूदो दे विप्पवासो । [ जात ! मातुलकुले वर्तमानस्य प्रकृतीभूतस्ते विप्रवासः । ]

भरत —अथ चतुर्दश वर्षाणि किं कारणमवेक्षितानि ।

कैकेयी—जाद ! चउद्दस दिअस त्ति वत्तुकामाए पय्याउलहिअआए चउद्दस वरिसाणि त्ति उत्तं । [ जात ! चतुर्दश दिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दश वर्षाणीत्युक्तम् । ]

भरतः—अस्ति पाण्डित्यं सम्यग् विचारयितुम् । अथ विदितमेतद् गुरुजनस्य ।

सुमन्त्र —कुमार ! वसिष्ठवामदेवप्रभृतीनामनुमतं विदितं च ।

भरतः—हन्त त्रैलोक्यसाक्षिणः खल्वेते । दिष्ट्यानपराद्धात्रभवती । अम्ब ! यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती, तत् सर्वं मर्षयितव्यम् । अम्ब ! अभिवादये ।

कैकेयी—जाद ! का णाम मादा पुत्तअस्स अवराहं ण मरिसेदि । उट्ठेहि उट्ठेहि । को एत्थ दोसो । [ जात ! का नाम माता पुत्रकस्यापराधं न मर्षयति । उत्तिष्ठोत्तिष्ठ । कोऽत्र दोषः । ]

भरतः– अनुगृहीतोऽस्मि । आपृच्छाम्यत्रभवतीम् । अथैवाहमार्यस्य साहाय्यार्थं कृत्स्नं राजमण्डलमुद्योजयामि । अयमिदानीं,

वेलामिमां मत्तगजान्धकारां करोमि सैन्योघनिवेशनद्धाम् ।
बलैस्तरद्भिश्च नयामि तुल्यं ग्लानिं समुद्रं सह रावणेन ॥ १६ ॥

अये शब्द इव । तूर्णं ज्ञायतां शब्दः ।

( प्रविश्य । )

प्रतिहारी–जेदु कुमारो । इमं वुत्तन्तं सुणिअ जेट्ठभट्टिणी मोहं गआ । [ जयतु कुमारः । इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता । ]

कैकेयी–हं !

भरतः–कथं मोहमुपगताम्बा ।

कैकेयी–एहि जाद ! अय्यं अस्सासइस्सामो । [ एहि ! जात ! आर्यामाश्वासयिष्यावः । ]

भरतः–यदाज्ञापयत्यम्बा ।

( निष्क्रान्ताः सर्वे । )

षष्ठोऽङ्कः ।

---

## अथ सप्तमोऽङ्कः ।

( ततः प्रविशति तापसः । )

तापसः–नन्दिलक ! नन्दिलक !

( प्रविश्य )

नन्दिलकः–अय्य ! अअं म्हि [ आर्य ! अयमस्मि । ]

तापसः–नन्दिलक ! कुलपतिर्विज्ञापयति––एष खलु स्वदारापहारिणं त्रैलोक्यविद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रां तत्र भवतीं सीतामादाय ऋक्षराक्षसवानरमुख्यैः परिवृतः सम्प्राप्तस्त्र-

भवान् शरद्विमलगगनचन्द्राभिरामो रामः । तद्यास्मिन्नाश्रमपदेऽस्मद्विभवेन यत् सङ्कल्पयितव्यं तत् सर्वं सज्जीक्रियतामिति ।

नन्दिलकः– अय्य ! सव्वं सज्जीकिदं । किन्तु– [ आर्य ! सर्वं सज्जीकृतम् । किन्तु– ]

तापसः–किमेतत् ।

नन्दिलकः–एत्थ विभीसणकेरआ रक्खसा । तेसं भक्खणणिमित्तं कुलवदी पमाणं । [ अत्र विभीषणसम्बन्धिनो राक्षसाः । तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम् । ]

तापसः–किमर्थम् ।

नन्दिलकः–ते खु खज्जन्ति । [ ते खलु खादन्ति । ]

तापसः–अलमलं सम्भ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

नन्दिलकः–णमो रक्खससज्जणाअ । ( निष्क्रान्तः । ) [ नमो राक्षससज्जनाय । ]

तापसः– ( विलोक्य । ) अये अयमत्रभवान् राघवः । य एष

जय नरवर ! जेयः स्याद् द्वितीयस्तवारि-
स्तव भवतु विधेया भूमिरेकातपत्रा ।
इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः
क्षितितलमवतीर्णो मानवेन्द्रो विमानात् ॥ १ ॥

जयतु भवान् जयतु । ( निष्क्रान्तः । )

मिश्रविष्कम्भकः ।

( ततः प्रविशति रामः । )

रामः–भोः !

समुदितबलवीर्यं रावणं नाशयित्वा
जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।
वचनमपि गुरूणामन्ततः पूरयित्वा
मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥ २ ॥

तापसीनाममभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु मैथिली। ( विलोक्य । ) अये इयं वैदेही,

सखीति सीतेति च जानकीति यथावयः स्निग्धतरं स्नुषेति ।
तपस्विदारैर्जनकेन्द्रपुत्री सम्भाष्यमाणा समुपैति मन्दम् ॥ ३ ॥

( ततः प्रविशति सीता तापसी च । )

तापसी–हव्या ! एसो दे कुडुम्बिओ । उवसप्प णं । ण सक्कं तुमं एआइणिं पेक्खिदुं । [ हला ! एष ते कुटुम्बिकः । उपसर्पैनम् । न शक्यं त्वामेकाकिनीं प्रेक्षितुम् । ]

सीता–हं ! अज्ज वि अविस्ससणीअं विअ मे पडिभादि । ( उपसृत्य । ) जेदु अय्यउत्तो । [ हम् ! अद्याप्यविश्वसनीयमिव मे प्रतिभाति । जयत्वार्यपुत्रः । ]

रामः–मैथिलि ! अपि जानासि, पूर्वाधिष्ठानमस्माकं जनस्थानमासीत् । अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ।

सीता–जाणामि जाणामि । ओलोइअपत्तआ उल्लोइदव्वा दाणिं संवुत्ता । [ जानामि जानामि । अवलोकितपत्रका उल्लोकयितव्या इदानीं संवृत्ताः । ]

रामः–एवमेतत् । निम्नस्थलोत्पादको हि कालः । मैथिलि ! अप्युपलभ्यतेऽस्य सप्तपर्णस्याधस्ताच्छुक्लवाससं भरतं दृष्ट्वा परित्रस्तं मृगयूथमासीत् ।

सीता–अय्यउत्त ! दिढं खु सुमरामि । [ आर्यपुत्र ! दृढं खलु स्मरामि । ]

रामः–अयं तु नस्तपसः साक्षिभूतो महाकच्छः । अत्रास्माभिरासीनैस्तातस्य निवपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो नाम मृगो दृष्टः ।

सीता–हं अय्यउत्त ! मा खु मा खु एवं भणिदुं । ( सीता वेपते । ) [ हम् आर्यपुत्र ! मा खलु मा खल्वेव भणितुम् । ]

रामः–अलमलं सम्भ्रमेण । अतिक्रान्तः खल्वेष कालः । ( दिशो विलोक्य । ) अये कुतो नु,

रेणुः समुत्पतति लोध्रसमानगौरः
सम्प्रावृणोति च दिशः पवनावधूतः ।
शब्दध्वनिश्च पटहस्वनधीरनादैः
सम्मूर्च्छितो वनमिदं नगरीकरोति ॥ ४ ॥

( प्रविश्य )

लक्ष्मणः–जयत्वार्यः । आर्य !

अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः ।
मातृभिः सह सम्प्राप्तो भरतो भ्रातृवत्सलः ॥ ५ ॥

रामः–वत्स लक्ष्मण ! किमेवं भरतः प्राप्तः ।

लक्ष्मणः–आर्य ! अथ किम् ।

रामः–मैथिलि ! श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीक्रियतां ते चक्षुः ।

सीता–अय्यउत्त ! इच्छिदव्वे काले भरदो आअदो । [ आर्यपुत्र ! एष्टव्ये काले भरत आगतः । ]

( ततः प्रविशति भरतः समातृकः । )

भरतः–

सैस्तैः प्रवृद्धविषयैर्विषमैर्निर्मुक्तं
मेघैर्निर्मुक्तममलं शरदीव सोमम् ।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोस्मि तुष्टहृदय. स्वजनानुबद्धः ॥ ६ ॥

रामः-अम्बाः ! अभिवादये ।

सर्वाः-जाद ! चिरं जीव । दिट्ठिआ वड्ढामो अवसिदपडिण्णं तुमं कुसलिणं सह वहूए पेक्खिअ । [ जात ! चिरं जीव । दिष्ट्या वर्धामहे अवसितप्रतिज्ञं त्वां कुशलिनं सह वध्वा प्रेक्ष्य । ]

रामः-अनुगृहीतोऽस्मि ।

लक्ष्मणः-अम्बाः ! अभिवादये ।

सर्वाः-जाद ! चिरं जीव । [ जात ! चिरं जीव । ]

लक्ष्मणः-अनुगृहीतोऽस्मि ।

सीता-अय्या ! वन्दामि । [ आर्याः ! वन्दे । ]

सर्वाः-वच्छे ! चिरमङ्गळा होहि । [ वत्से ! चिरमङ्गला भव । ]

सीता-अणुग्गहिदम्हि । [ अनुगृहीतास्मि । ]

भरतः-आर्य ! अभिवादये भरतोऽहमस्मि ।

रामः-एह्येहि वत्स ! इक्ष्वाकुकुमार ! स्वस्ति, आयुष्मान् भव ।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रल्हादय व्यसनदग्धमिदं शरीरम् ॥ ७ ॥

भरतः-अनुगृहीतोऽस्मि । आर्ये ! अभिवादये भरतोऽहमस्मि ।

सीता-अय्यउत्तेण चिरसञ्चारी होहि । [ आर्यपुत्रेण चिरसञ्चारी भव । ]

भरतः-अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

लक्ष्मणः-एह्येहि वत्स । दीर्घायुर्भव । परिष्वजस्व गाढम् । ( आलिङ्गति । )

भरतः-अनुगृहीतोऽस्मि । आर्य प्रतिगृह्यतां राज्यभारः ।

रामः-वत्स ! कथमिव ।

९ कैकेयी—जाद ! चिराहिलसिदो क्खु एसो मणोरहो । [ जात ! चिराभिलषितः खल्वेष मनोरथः । ]

( ततः प्रविशति शत्रुघ्नः । )

१२ शत्रुघ्नः—

विविधैर्व्यसनैः क्लिष्टमक्लिष्टगुणतेजसम् ।
द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम् ॥ ८ ॥

( उपगम्य । ) आर्य ! शत्रुघ्नोऽहमभिवादये ।

रामः—एह्येहि वत्स ! स्वस्ति, आयुष्मान् भव ।

३ शत्रुघ्नः—अनुगृहीतोऽस्मि । आर्ये अभिवादये ।

सीता—वच्छ ! चिरं जीव । [ वत्स ! चिरं जीव । ]

शत्रुघ्नः—अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

६ लक्ष्मणः—स्वस्ति, आयुष्मान् भव ।

शत्रुघ्नः—अनुगृहीतोऽस्मि । आर्य ! एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः ।

तीर्थोदकेन मुनिभिः स्वयमाहृतेन
नानानदीनदगतेन तव प्रसादात् ।
इच्छन्ति ते मुनिगणाः प्रथमाभिषिक्तं
द्रष्टुं मुखं सलिलसिक्तमिवारविन्दम् ॥ ९ ॥

कैकेयी—गच्छ जाद ! अभिसेहि अभिसेअं । [ गच्छ जात ! अभिलषाभिषेकम् । ]

३ रामः—यदाज्ञापयत्यम्बा । ( निष्क्रान्तः । )

( नेपथ्ये )

जयतु भवान् । जयतु स्वामी । जयतु महाराजः । जयतु देवः ।

६ जयतु भद्रमुखः । जयत्वार्यः । जयतु रावणान्तकः ।

कैकेयी—एदे पुरोहिदा कञ्चुइणो पुत्तअस्स मे विजअघोसं वड्ढ-

अन्तो आसीहि पूजअन्ति । [ एते पुरोहिताः कञ्चुकिनः पुत्रकस्य मे विजयघोषं वर्धयन्त आशीर्भिः पूजयन्ति । ]

सुमित्रा—पइदीओ परिचारआ सज्जणा अ पुत्तअस्स मे विजअं वड्ढअन्ति । [ प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य मे विजयं वर्धयन्ति । ]

( नेपथ्ये )

भो भो जनस्थानवासिनस्तपस्विनः ! श्रृण्वन्तु श्रृण्वन्तु भवन्तः ।

हत्वा रिपुप्रभवमप्रतिमं तमौघं
सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः ।
सीतामवाप्य सकलाशुभवर्जनीयां
रामो महीं जयति सर्वजनाभिरामः ॥ १० ॥

कैकेयी—अम्महे, पुत्तस्स मे विजअघोसणा वड्ढइ । [ अम्महे पुत्रस्य मे विजयघोषणा वर्धते । ]

( ततः प्रविशति कृताभिषेको रामः सपरिवारः । )

रामः—( विलोक्याकाशे । ) भोस्तात !

स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यं
कर्म त्वयाभिलषितं मयि यत् तदेतत् ।
राजा किलास्मि भुवि सत्कृतभारवाही
धर्मेण लोकपरिरक्षणमभ्युपेतम् ॥ ११ ॥

भरतः—

अधिगतनृपशब्दं धार्यमाणातपत्रं
विकसितकृतमौलिं तीर्थतोयाभिषिक्तम् ।
गुरुमधिगतलीलं वन्द्यमानं जनौघै—
र्नवशशिनमिवार्यं पश्यतो मे न तृप्तिः ॥ १२ ॥

शत्रुघ्न.—एतदार्याभिषेकेण कुलं मे नष्टकल्मषम् ।
पुनः प्रकाशतां याति सोमस्येवोदये जगत् ॥ १३ ॥

रामः—वत्स लक्ष्मण ! अधिगतराज्योऽहमस्मि ।

लक्ष्मणः— दिष्ट्या भवान् वर्धते ।

( प्रविश्य )

काञ्चुकीयः— जयतु महाराजः । एष खलु तत्रभवान् विभीषणो विज्ञापयति, सुग्रीवनीलमैन्दजाम्बवद्धनूमत्प्रमुखाश्चानुगच्छन्तो विज्ञापयन्ति—दिष्ट्या भवान् वर्धत इति ।

रामः— सहायानां प्रसादाद् वर्धत इति कथ्यताम् ।

काञ्चुकीयः— यदाज्ञापयति महाराजः ।

कैकेयी— धण्णा खु म्हि । इदं अब्भुदअं अओज्झाअं पेक्खिदुं इच्छामि । [ धन्या खल्वस्मि । इममभ्युदयमयोध्यायां प्रेक्षितुमिच्छामि । ]

रामः—द्रक्ष्यति भवती । ( विलोक्य । ) अये प्रभाभिर्वनमिदमखिलं सूर्यवत् प्रतिभाति । ( विमृश्य । ) आ ज्ञातम् । सम्प्राप्तं पुष्पकं दिवि रावणस्य विमानम् । कृतसमयमिदं स्मृतमात्रमुपगच्छतीति । तत् सर्वैरारुह्यताम् ।

( सर्वे आरोहन्ति । )

रामः— अद्यैव यास्यामि पुरीमयोध्यां
सम्बन्धिभिर्मित्रैरनुगम्यमानः ।

लक्ष्मणः— अद्यैव पश्यन्तु च नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥ १४ ॥

( भरतवाक्यम् । )

यथा रामश्च जानक्या बन्धुभिश्च समागतः ।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥ १५ ॥

( निष्क्रान्ताः सर्वे । )

सप्तमोऽङ्कः ।

प्रतिमानाटकं समाप्तम् ।

---

# श्लोकानुक्रमणिका ।

## अभिषेकस्य कथावस्तु ।

अत्र किष्किन्धा-सुन्दर युद्धकाण्डगत रामचरित सर्वं प्रपञ्चितम् , अन्ते च दैवैर्दशरथानुमत्या रामो राज्येऽभिषिक्त ।

## पात्राणि ।

पुरुषा.—

राम —दशरथस्य ज्येष्ठ पुत्रः ।
लक्ष्मण.—रामानुजः ।
सुग्रीव.—कपीश्वर. ।
नील.—सुग्रीवविधेयो वानर· ।
विभीषण.—लङ्केश्वरस्य भ्राता ।
वाली—किष्किन्धाधिपति. ।
अङ्गद —वालिपुत्र ।
रावण —लङ्केश्वर· ।
हनुमान्—वानरमुख्यः ।
बलाध्यक्ष —वानरसेनापतिः ।
विद्युज्जिह्व —राक्षस ।
शङ्कुकर्णः—लङ्केश्वरस्य वार्ताहर. ।
अक्ष· / इन्द्रजित् —लङ्केश्वरस्य पुत्रौ ।
शुकसारणौ—मायारूपधारिणौ राक्षसौ ।
निल्मुख.—सुग्रीवस्य वार्ताहरः ।
ककुभ —वानरेश्वरस्य भृत्य ।
काञ्चुकीय.—राक्षसेश्वरस्य भृत्यः ।
काञ्चुकीय.—वानरेश्वरस्य भृत्य. ।

प्रथमः
द्वितीयः } —विद्याधराः ।
तृतीयः
अग्निः
वरुणः

स्त्रियः—

सीता—रामपत्नी ।
तारा—वालिपत्नी ।
राक्षस्यः

---

॥ श्रीः ॥

भासनाटकचक्रे

# अभिषेकनाटकम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः—

यो गाधिपुत्रमखविघ्नकराभिहन्ता
युद्धे विराधखरदूषणवीर्यहन्ता ।
दर्पोद्धतोल्बणकबन्धकपीन्द्रहन्ता
पायात् स वो निशिचरेन्द्रकुलाभिहन्ता ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । ( परिक्रम्यावलोक्य ) अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते ! अङ्ग ! पश्यामि ।

३ ( नेपथ्ये )

सुग्रीव ! इत इतः ।

( प्रविश्य )

६ पारिपार्श्विकः—भाव !

श्रुतो नु खल्वेष समुत्थितो ध्वनिः
प्रवर्तते श्रोत्रविदारणो महान् ।
प्रचण्डवातोद्धतभीमगामिनां
बलाहकानामिव खेऽभिगर्जताम् ॥ २ ॥

सूत्रधारः—मार्ष ! किं नावगच्छसि । एष खलु सीतापहरणजनितसन्तापस्य रघुकुलप्रदीपस्य सर्वलोकनयनाभिरामस्य रामस्य च,

३ दाराभिमर्शननिर्विषयीकृतस्य सर्वहर्यृक्षराजस्य सुविपुलमहाग्रीवस्य सुग्रीवस्य च परस्परोपकारकृतप्रतिज्ञयोः सर्ववानराधिपतिं हेममालिनं वालिनं हन्तुं समुद्योगः प्रवर्तते । तत एतौ हि,

इदानीं राज्यविभ्रष्टं सुग्रीवं रामलक्ष्मणौ ।
पुनः स्थापयितुं प्राप्ताविन्द्रं हरिहराविव ॥ ३ ॥

( निष्क्रान्तौ )

स्थापना ।

३ ( ततः प्रविशति रामो, लक्ष्मणसुग्रीवौ, हनुमांश्च । )

रामः–सुग्रीव ! इत इतः ।

मत्सायकाग्निहतभिन्नविकीर्णदेहं
शत्रुं तवाद्य सहसा भुवि पातयामि ।
राजन् ! भयं त्यज ममापि समीपवर्ती
दृष्टस्त्वया च समरे निहतः स वाली ॥ ४ ॥

सुग्रीवः–देव ! अहं खल्वार्यस्य प्रसादाद् देवानामपि राज्यमाशङ्के, किं पुनर्वानराणाम् । कुतः,

मुक्तो देव ! तवाद्य वालिहृदयं भेत्तुं न मे संशयः
सालान् सप्त महावने हिमगिरेः शृङ्गोपमाञ्छ्रीधर ।
भित्त्वा वेगवशात् प्रविश्य धरणीं गत्वा च नागालयं
मज्जन् वीर ! पयोनिधौ पुनरयं सम्प्राप्तवान् सायकः ॥५॥

हनुमान्–

तव नृप ! मुखनिःसृतैर्वचोभि-
र्विगतभया हि वयं विनष्टशोकाः ।
रघुवर ! हरये जयं प्रदातुं
गिरिमभिगच्छ सनीरनीरदाभम् ॥ ६ ॥

लक्ष्मणः—आर्य ! सोपस्नेहतया वनान्तरस्यासितः खलु किष्किन्धया भवितव्यम् ।

३ सुग्रीवः—सम्यगाह कुमारः ।

सम्प्राप्ता हरिवरबाहुसम्प्रगुप्ता
किष्किन्धा तव नृप ! बाहुसम्प्रगुप्ता ।
तिष्ठ त्वं नृवर ! करोम्यहं विसंज्ञं
नादेन प्रचलमहीधरं नृलोकम् ॥ ७ ॥

रामः—भवतु, गच्छ ।

सुग्रीवः—यदाज्ञापयति देवः । ( परिक्रम्य ) भोः !

अपराधमनुद्दिश्य परित्यक्तस्त्वया विभो ! ।
युद्धे त्वत्पादशुश्रूषां सुग्रीवः कर्तुमिच्छति ॥ ८ ॥

( नेपथ्ये )

कथं कथं सुग्रीव इति ।

३ ( ततः प्रविशति वाली, गृहीतवस्त्रया तारया सह । )

वाली—कथं कथं सुग्रीव इति ।

तारे ! विमुञ्च मम वस्त्रमनिन्दिताङ्गि !
प्रस्रस्तवक्त्रनयने ! किमसि प्रवृत्ता ।
सुग्रीवमद्य समरे विनिपात्यमानं
तं पश्य शोणितपरिप्लुतसर्वगात्रम् ॥ ९ ॥

तारा—पसीअउ पसीअउ महाराओ । अप्पेण कारणेण ण आगमिस्सइ सुग्गीओ । ता अमच्चवग्गेण सह सम्मन्तिअ गन्तव्वं ।

३ [ प्रसीदतु प्रसीदतु महाराजः । अल्पेन कारणेन नागमिष्यति सुग्रीवः । तदमात्यवर्गेण सह समन्त्र्य गन्तव्यम् । ]

वाली—आः,

शक्रो वा भवतु गतिः शशाङ्कवक्त्रे !
शत्रोर्मे निशितपरश्वधः शिवो वा ।
नालं मामभिमुखमेत्य सम्प्रहर्तुं
विष्णुर्वा विकसितपुण्डरीकनेत्रः ॥ १० ॥

तारा–पसीअउ पसीअउ महाराओ । इमस्स जणस्स अणुग्गहं दाव करेउं अरिहदि[1] महाराओ । [ प्रसीदतु प्रसीदतु महाराजः । अस्य जनस्यानुग्रहं तावत् कर्तुमर्हति महाराजः । ]

वाली–श्रूयतां मत्पराक्रमः ।

तारे ! मया खलु पुरामृतमन्थनेऽपि
गत्वा प्रहस्य सुरदानवदैत्यसङ्घान् ।
उत्फुल्लनेत्रमुरगेन्द्रमुदग्ररूप-
माकृष्यमाणमवलोक्य सुविस्मितासि ॥ ११ ॥

तारा–पसीअउ पसीअउ महाराओ । [ प्रसिदतु प्रसीदतु महाराजः । ]

वाली–आः, मम वशानुवर्तिनी भव । प्रविश त्वमभ्यन्तरम् ।

३ तारा–एसा गच्छामि मन्दभाआ ( निष्क्रान्ता ) [ एषा गच्छामि मन्दभागा । ]

वाली–हन्त प्रविष्टा तारा । यावदहं सुग्रीवं भग्नग्रीवं करोमि ।

६ ( द्रुतमुपगम्य ) सुग्रीव ! तिष्ठ तिष्ठ ।

इन्द्रो वा शरणं तेऽस्तु प्रभुर्वा मधुसूदनः ।
मच्चक्षुष्पथमासाद्य सजीवो नैव यास्यसि ॥ १२ ॥

इत इतः ।

सुग्रीवः–यदाज्ञापयति महाराजः ।

३ ( उभौ नियुद्धं कुरुतः । )

---

१ अर्हदि ।

राम.—एष एष वाली,

सन्दष्टोष्ठश्चण्डसंरक्तनेत्रो
　मुष्टिं कृत्वा गाढमुद्वृत्तदंष्ट्रः ।
गर्जन् भीमं वानरो भाति युद्धे
　सवर्ताग्निः सन्दिधक्षुर्यथैव ॥ १३ ॥

लक्ष्मण.—सुग्रीवमपि पश्यत्वार्यः,

विकसितशतपत्ररक्तनेत्र-
　कनकमयाङ्गदनद्धपीनबाहुः ।
हरिवरमुपयाति वानरत्वाद्
　गुरुमभिभूय सता विहाय वृत्तम् ॥ १४ ॥

वालिना ताडितः पतितः सुग्रीवः ।

हनुमान्—हा ! धिक् । ( ससम्भ्रमं राममुपगम्य ) जयतु देवः ।

३ पावस्था ।

युक्तं भो ! नरपतिधर्ममास्थितेन
युद्धे मां छलयितुमक्रमेण राम ! ।
वीरेण व्यपगतधर्मसंशयेन
लोकानां छलमपनेतुमुद्यतेन ॥ १७ ॥

हन्त भोः ।

भवता सौम्यरूपेण यशसो भाजनेन च ।
छलेन मां प्रहरता प्ररूढमयशः कृतम् ॥ १८ ॥

भो राघव ! चीरवल्कलधारिणा वेषविपर्यस्तचित्तेन मम भ्रात्रा सह युद्धव्यग्रस्याधर्म्यः खलु प्रच्छन्नो वधः ।

रामः—कथमधर्म्यः खलु प्रच्छन्नो वध इति ।

३ वाली—कः संशयः ।

रामः—न खल्वेतत् । पश्य,

वागुराच्छन्नमाश्रित्य मृगाणामिष्यते वधः ।
वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डितः ॥ १९ ॥

वाली—दण्ड्य इति मां भवान् मन्यते ।

रामः—कः संशयः ।

३ वाली—केन कारणेन ।

रामः—अगम्यागमनेन ।

वाली—अगम्यागमनेनेति । एषोऽस्माकं धर्मः ।

६ रामः—ननु युक्तं भोः !

भवता वानरेन्द्रेण धर्माधर्मौ विजानता ।
आत्मानं मृगमुद्दिश्य भ्रातृदाराभिमर्शनम् ॥ २० ॥

वाली—भ्रातृदाराभिमर्शनेन तुल्यदोषयोरहमेव दण्डितो, न सुग्रीवः ।

रामः—दण्डितस्त्वं हि दण्ड्यत्वाद्, अदण्ड्यो नैव दण्ड्यते ।

३ वाली—

सुग्रीवेणाभिमृष्टाभूद् धर्मपत्नी गुरोर्मम ।
तस्य दाराभिमर्शेन कथं दण्ड्योऽस्मि राघव ॥ २१ ॥

रामः–न स्वेव हि कदाचिज्ज्येष्ठस्य यवीयसो दाराभिमर्शनम् ।

वाली–हन्त अनुत्तरा वयम् । भवता दण्डितत्वाद् विगत-
३ पापोऽहं ननु ।

रामः–एवमस्तु ।

सुग्रीवः–हा धिक् ।

करिकरसदृशौ गजेन्द्रगामिं-
स्तव रिपुशस्त्रपरिक्षताङ्गदौ च ।
अवनितलगतौ समीक्ष्य बाहू
हरिवर ! हा पततीव मेऽद्य चित्तम् ॥ २२ ॥

वाली–सुग्रीव ! अलमलं विषादेन । ईदृशो लोकधर्मः ।

( नेपथ्ये )

३ हा हा महाराओ ।

वाली–सुग्रीव ! सवार्यतां संवार्यतां स्त्रीजनः । एवंगतं नार्हति
मां द्रष्टुम् ।

६ सुग्रीवः–यदाज्ञापयति महाराजः । हनूमन् ! एवं क्रियताम् ।

हनूमान्–यदाज्ञापयति कुमारः । ( निष्क्रान्तः । )

( ततः प्रविशत्यङ्गदो हनूमांश्च )

९ हनूमान्–अङ्गद ! इत इतः ।

अङ्गदः–

श्रुत्वा कालवशं यान्तं हरिमृक्षगणेश्वरम् ।
समापतितसन्तापः प्रयामि शिथिलक्रमः ॥ २३ ॥

हनूमन् ! कुत्र महाराजः ।

हनूमान्–एप महाराजः,

शरनिर्भिन्नहृदयो विभाति धरणीतले ।
गुहशक्तिसमाक्रान्तो यथा क्रौञ्चाचलोत्तमः ॥ २४ ॥

अङ्गदः–( उपसृत्य ) हा महाराज !

अतिबलसुखशायी पूर्वमासीर्हरीन्द्रः
क्षितितलपरिवर्ती क्षीणसर्वाङ्गचेष्टः ।
शरवरपरिवीतं व्यक्तमुत्सृज्य देहं
किमभिलषसि वीर स्वर्गमद्याभिगन्तुम् ॥ २५ ॥

( इति भूमौ पतितः । )

वाली–अङ्गद ! अलमलं विषादेन । भोः सुग्रीव !

मया कृतं दोषमपास्य बुद्ध्या
त्वया हरीणामधिपेन सम्यक् ।
विमुच्य रोषं परिगृह्य धर्मं
कुलप्रवालं परिगृह्यतां नः ॥ २६ ॥

सुग्रीवः–यदाज्ञापयति महाराजः ।

वाली–भो राघव ! यस्मिन् कस्मिन् वापराधेऽनयोर्वानरचापलं क्षन्तुमर्हसि ।

रामः–बाढम् ।

वाली–सुग्रीव ! प्रतिगृह्यतामस्मत्कुलधनं हेममाला ।

सुग्रीवः–अनुगृहीतोऽस्मि । ( प्रतिगृह्णाति । )

वाली–हनूमन् ! आपस्तावत् ।

हनूमान्–यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) इमा आपः ।

वाली– ( आचम्य ) परित्यजन्तीव मां प्राणाः । इमा गङ्गाप्रभृतयो महानद्य एता उर्वश्यादयोऽप्सरसो मामभिगताः । एष सहस्र-

१ °मद्यापि यन्तुम् ।

हंसप्रयुक्तो वीरवाही विमानः कालेन प्रेषितो मां नेतुमागतः । भवतु । अयमयमागच्छामि । ( स्वर्यातः । )

सर्वे–हा हा महाराज ! ।

रामः–हन्त स्वर्गं गतो वाली । सुग्रीव ! क्रियतामस्य संस्कारः ।

सुग्रीवः–यदाज्ञापयति देवः ।

रामः–लक्ष्मण ! सुग्रीवस्याभिषेकः कल्प्यताम् ।

लक्ष्मणः–यदाज्ञापयत्यार्यः ।

( निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

---

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति ककुभः । )

ककुभः–निष्ठितप्रायत्वात् कार्यस्याहारव्यापृताः सर्वे वानरयूथपाः । तस्मादहमपि किञ्चिदाहारजातं सम्भावयामि । ( तथा करोति । )

( प्रविश्य )

विलमुखः–पेसिओ म्हि महाराएण सुग्गीवेण–अय्यरामस्स किदोवआरप्पच्चुवआरणिमित्तं सव्वासु दिसासु सीदाविअअणे पेसिआ सव्वे वाणरा आअदा । तेसं दक्खिणापहगदस्स कुमारस्स अङ्गदस्स पवुत्तिं जाणिअ सिग्घं आअच्छत्ति । ता कहिं णु हु गओ कुमारो । ( परिक्रम्यावलोक्य ) एसो अय्यककुहो । जाव णं पुच्छामि । ( उपसृत्य ) सुहं अय्यस्स । [ प्रेषितोऽस्मि महाराजेन सुग्रीवेण–आर्यरामस्य कृतोपकारप्रत्युपकारनिमित्तं सर्वासु दिक्षु सीताविचयने प्रेषिताः सर्वे वानरा आगताः । तेषां दक्षिणापथगतस्य

कुमारस्याङ्गदस्य प्रवृत्तिं ज्ञात्वा शीघ्रमागच्छेति । तत् क नु खलु गतः कुमारः । एष आर्यककुभः । यावदेनं पृच्छामि । सुखमार्यस्य । ]

ककुभः–अये विलमुखः । कुतो भवान् ।

बिलमुखः–अय्य ! महाराअस्स सासणेण कुमारं अङ्गदं पेक्खिदुं आअदो म्हि । [ आर्य ! महाराजस्य शासनेन कुमारमङ्गदं प्रेक्षितुमागतोऽस्मि । ]

ककुभः–अपि कुशली आर्यरामो महाराजश्च ।

बिलमुखः–आम् ।

ककुभः–कोऽभिप्रायो महाराजस्य ।

( बिलमुखः पेसिओ म्हि इति पूर्ववत् पठति )

ककुभः–किं न जानीषे निश्चितमर्थं कार्यस्य ।

बिलमुखः–किं किम् ।

ककुभः–श्रूयतां,

लब्ध्वा वृत्तान्तं रामपत्न्याः खगेन्द्राद्
आरुह्यागेन्द्रं सद्विपेन्द्रं महेन्द्रम् ।
लङ्कामभ्येतुं वायुपुत्रेण शीघ्रं
वीर्यप्राबल्याल्लङ्घितः सागरोऽद्य ॥ १ ॥

तस्मादागच्छ, कुमारपादमूलमेव संश्रयावः ।

( निष्क्रान्तौ । )

विष्कम्भकः ।

( ततः प्रविशति राक्षसीगणपरिवृता सीता । )

सीता–हद्धि अदिधीरा खु म्हि मन्दभाआ । जा अय्यउत्तविरहिदा रक्खसराअभवणं आणीदा अणिट्ठाणि अणरिहाणि जहमणोरहप्पवुत्ताणि वअणाणि साविअमाणा जीवामि मन्दभाआ । आदु

अय्यउत्तसाअअप्पच्चएण कह वि अत्ताण पय्यवत्थावेमि। किं णु खु अज्ज पज्जाळिअमाणे कम्मआरग्गिमण्डळे उदअप्पसेओ विअ किञ्चि हिअअप्पसादो समुप्पण्णो। किं णु खु म अन्तरेण पसण्णहिअओ अय्यउत्तो भवे। [ हा धिग् अतिधीरा खल्वस्मि मन्दभागा। यार्यपुत्रविरहिता राक्षसराजभवनमानीतानिष्टा यनर्हाणि यथामनोरथप्रवृत्तानि वचनानि श्रा यमाणा जीवामि मन्दभागा। अथवा आर्यपुत्रसायकप्रत्ययेन कथमप्यात्मान पर्यवस्थापयामि। किन्तु खल्वद्य प्रज्वाल्यमाने कर्मकाराग्निमण्डले उदकप्रसेक इव किञ्चिद् हृदयप्रसादः समुत्पन्न। किन्तु खलु माम तरेण प्रसन्नहृदय आर्यपुत्रो भवेत्। ]

( तत प्रविशति हनूमान् अङ्गुलीयकहस्त । )

हनूमान्–( लङ्का प्रविश्य ) अहो रावणभवनस्य विन्यास ।

कलकरचितचित्रतोरणाढ्या
मणिवरविद्रुमशोभितप्रदेशा ।
विमलचिकृतसञ्चितैर्विमाने
र्वियति महेन्द्रपुरीव भाति लङ्का ॥ २ ॥

अहो तु खलु,

एता प्राप्य दशग्रीवो राजलक्ष्मीमनुत्तमाम् ।
विमार्गप्रतिपन्नत्वाद् व्यापादयितुमुद्यत ॥ ३ ॥

( सर्वतो गत्वा ) विचरितप्राया मया लङ्का ।

गर्भागारविनिष्कुटेषु बहुश शालाविमानादिषु
स्नानागारनिशाचरेन्द्रभवनप्रासादहर्म्येषु च ।
पानागारनिशान्तदेशविवरेष्वाक्रान्तवानस्म्यह
सर्वं भो । विचित न चैव नृपते पत्नी मया दृश्यते

अहो व्यर्थो मे परिश्रमः । भवतु, एतद्धर्म्याग्रमारुह्यावलोकयामि । ( तथा कृत्वा ) अये अयं प्रमदवनराशिः । इमं प्रविश्य परीक्षिष्ये ।
३ ( प्रविश्यावलोक्य ) अहो प्रमदवनसमृद्धिः । इह हि,

कनकरचितविद्रुमेन्द्रनीलै-
विकृतमहाद्रुमपङ्क्तिचित्रदेशा ।
रुचिरतरनगा विभाति शुभ्रा
नभसि सुरेन्द्रविहारभूमिकल्पा ॥ ५ ॥

अपि च,

चित्रप्रस्रुतहेमधातुरुचिराः शैलाश्च दृष्टा मया
नानावारिचराण्डजैर्विरचिता दृष्टा मया दीर्घिकाः ।
नित्यं पुष्पफलाढ्यपादपयुता देशाश्च दृष्टा मया
सर्वं दृष्टमिदं हि रावणगृहे सीता न दृष्टा मया ॥ ६ ॥

को नु खल्वेतस्मिन् प्रदेशे सप्रभ इव दृश्यते । तत्र तावदवलोकयामि । ( तथा कृत्वा ) अये का नु खल्वियम् ।

राक्षसीभिः परिवृता विकृताभिः सुमध्यमा ।
नीलजीमूतमध्यस्था विद्युल्लेखेव शोभते ॥ ७ ॥

यैषा,

असितभुजगकल्पां धारयन्त्येकवेणीं
करपरिमितमध्या कान्तसंसक्तचित्ता ।
अनशनकृशदेहा बाष्पसंसिक्तवक्त्रा
सरसिजवनमालेवातपे विप्रविद्धा ॥ ८ ॥

अये कथं दीपिकावलोकः । ( विलोक्य ) अये रावणः ।

मणिविरचितमौलिश्चारुताम्रायताक्षो
मदसललितगामी मत्तमातङ्गलीलः ।

युवतिजननिकाये मालसौ राक्षसेशो
हरिरिव हरिणीनामन्तरे चेष्टमानः ॥ ९ ॥

किमिदानीं करिष्ये । भवतु, दृष्टम् । एनमशोकपादपमारुह्य कोटरान्तरितो भूत्वा दृढं वृत्तान्तं ज्ञास्यामि । ( तथा करोति । )

३ ( ततः प्रविशति रावणः सपरिवारः । )

रावणः—

दिव्यास्त्रैः सुरदैत्यदानवचमूविद्रावणं रावणं
युद्धे क्रुद्धसुरेभदन्तकुलिशव्यालीढवक्षस्थलम् ।
सीता माममविवेकिनी न रमते सक्ता च मुग्धेक्षणा
क्षुद्रे क्षत्रियतापसे ध्रुवमहो दैवस्य चिन्नक्रिया ॥ १० ॥

( ऊर्ध्वमवलोक्य ) एष एष चन्द्रमाः,

रजतरचितदर्पणप्रकाशः
करनिकरैर्हृदयं ममाभिपीड्य ।
उदयति गगने विजृम्भमाणः
कुमुदवनप्रियबान्धवः शशाङ्कः ॥ ११ ॥

( परिक्रम्य ) एषा सीता पादपमूलमाश्रित्य ध्यानसंवीतहृदयानशनक्षामवदना स्वदेहमिव प्रवेष्टुकामा सङ्गूढस्तनोदरी दुर्दिनान्तर्गता
३ चन्द्रलेखेव राक्षसीगणपरिवृत्तोपविष्टा । यैषा,

अपास्य भोगान् मां चैव श्रियं च महतीमिमाम् ।
मानुषे न्यस्तहृदया नैव वशयत्वमागता ॥ १२ ॥

हनूमान्—हन्त सुविज्ञातम् ।

इयं सा राजतनया पत्नी रामस्य मैथिली ।
सिंहदर्शनवित्रस्ता मृगीव परितप्यते ॥ १३ ॥

रावणः—( उपेत्य )

सीते ! त्यज त्वं व्रतमुग्रचर्यं
भजस्व मां भामिनि ! सर्वगात्रैः ।
अपास्य तं मानुषमद्य भद्रे !
गतायुषं कामपथान्निवृत्तम् ॥ १४ ॥

सीता—हस्सो खु रावणओ, जो वअणगदसिद्धिं वि ण जाणादि ।
[ हास्यः खलु रावणकः, यो वचनगतसिद्धिमपि न जानाति । ]

३ हनूमान्—( सक्रोधम् ) अहो रावणस्यावलेपः ।

तौ च बाहु न विज्ञाय तथापि सुमहद् धनुः ।
सायकं चापि रामस्य गतायुरिति भाषते ॥ १५ ॥

न शक्नोमि रोषं धारयितुम् । भवतु, अहमेवार्यरामस्य कार्यं साधयामि । अथवा,

यद्यहं रावणं हन्मि कार्यसिद्धिर्भविष्यति ।
यदि मां प्रहरेद् रक्षो महन् कार्यं विपद्यते ॥ १६ ॥

रावणः—

वरतनु ! तनुगात्रि ! कान्तनेत्रे !
कुवलयदामनिभां विमुच्य वेणीम् ।
बहुविधमणिरत्नभूषिताङ्गं
दशशिरसं मनसा भजस्व देवि ! ॥ १७ ॥

सीता—हं विपरीओ खु धम्मो, जं जीवदि खु अअं पापरक्खसो ।
[ हं, विपरीतः खलु धर्मः, यद् जीवति खल्वयं पापराक्षसः । ]

२ रावणः—ननु देवि ।

सीता—सत्तो सि । [ शप्तोऽसि । ]

रावणः—हहह, अहो पतिव्रतायास्तेजः ।

देवाः सेन्द्रादयो भग्ना दानवाश्च मया रणे ।
सोऽहं मोहं गतोऽस्म्यद्य सीतायास्त्रिभिरक्षरैः ॥ १८ ॥

( नेपथ्ये )

जयतु देवः । जयतु लङ्केश्वरः । जयतु स्वामी । जयतु महाराजः । दश नाडिका पूर्णाः । अतिक्रामति स्नानवेला । इत इतो महाराजः ।

( निष्क्रान्तः सपरिवारो रावणः । )

हनूमान्–हन्त निर्गतो रावणः, सुप्ताश्च राक्षसस्त्रियः । अयं कालो देवीमुपसर्पितुम् । ( कोटराद्‌वरुह्य ) जयत्वविधवा ।

प्रेषितोऽहं नरेन्द्रेण रामेण विदितात्मना ।
त्वद्गतस्नेहसन्तापविक्लवीकृतचेतसा ॥ १९ ॥

सीता–( आत्मगतम् ) को णु खु अअं, पावरक्खसो अय्यउत्तकेरओ त्ति अत्ताणं ववदिसिअ वाणररूवेण मं वञ्चिदुकामो भवे । भोदु, तुह्णिआ भविस्सं । [ को नु खल्वयं, पापराक्षस आर्यपुत्रसम्बन्धीयात्मानं व्यपदिश्य वानररूपेण मां वञ्चयितुकामो भवेत् । भवतु, तूष्णीका भविष्यामि । ]

हनूमान्–कथं न प्रत्येति भवती । अलमन्यशङ्कया । श्रोतुमर्हति भवती ।

इक्ष्वाकुकुलदीपेन सन्धाय हरिणा सहम् ।
प्रेषितस्त्वद्विचित्यर्थं हनूमान् नाम वानरः ॥ २० ॥

सीता–( आत्मगतम् ) जो वा को वा भोदु । अय्यउत्तणामसङ्कित्तणेण अहं एदेण अभिभासिस्सं । ( प्रकाशम् ) भद्द ! को वुत्तन्तो अय्यउत्तस्स । [ यो वा को वा भवतु । आर्यपुत्रनामसङ्कीर्तनेनाहमेतेनाभिभाषिष्ये । भद्र ! को वृत्तान्त आर्यपुत्रस्य । ]

हनूमान्–भवति ! श्रूयताम्,

अनशनपरिखिन्नं पाण्डु स क्षामवक्त्रं
तव वरगुणचिन्तावीतलावण्यलीलम् ।
वहति विगतधैर्यं हीयमानं शरीरं
मनसिजशरदग्धं बाष्पपर्याकुलाक्षम् ॥ २१ ॥

सीता-( आत्मगतम् ) हद्धि वीळिआ खु म्हि मन्दभाआ एवं
सोअन्तं अय्यउत्तं सुणिअ । अय्यउत्तस्स विरहपरिस्समो वि मे
३ सफळो संवुत्तो त्ति पेक्खामि, जदि खु अअं वाणरो सच्चं मन्तेदि ।
अय्यउत्तस्स इमस्सिं जणे अणुक्कोसं परिस्समं च सुणिअ सुहस्स
दुक्खस्स अ अन्तरे डोळाअदि विअ मे हिअअं । (प्रकाशम्) भद्द !
६ कहं तुम्हेहि अय्यउत्तस्स सङ्गमो जादो । [ हा धिग् व्रीडिता
खल्वस्मि मन्दभागा एवं शोचन्तमार्यपुत्रं श्रुत्वा । आर्यपुत्रस्य विरह-
परिश्रमोऽपि, मे सफलः संवृत्त इति पश्यामि, यदि खल्वयं वानरः
९ सत्यं मन्त्रयते । आर्यपुत्रस्यास्मिन् जनेऽनुक्रोशं परिश्रमं च श्रुत्वा
सुखस्य दुःखस्य चान्तरे दोलायत इव मे हृदयम् । भद्र ! कथं युष्मा-
भिरार्यपुत्रस्य संगमो जातः । ]
१२ हनूमान्-भवति ! श्रूयतां ।

हत्वा वालिनमाहवे कपिवरं त्वत्कारणादग्रजं
सुग्रीवस्य कृतं नरेन्द्रतनये ! राज्यं हरीणां ततः ।
राज्ञा त्वद्विचयाय चापि हरयः सर्वा दिशः प्रेपिता-
स्तेषामस्म्यहमद्य गृध्रवचनात् त्वां देवि ! सम्प्राप्तवान् ॥२२॥

अपि च, ईदृशमिव ।
सीता-अहो अअरुणा क्खु इस्सरा एव्वं सोअन्तं अय्यउत्तं कर-
३ अन्तो । [ अहो अकरुणाः खल्वीश्वराः एवं शोचन्तमार्यपुत्रं कुर्वन्तः । ]
हनूमान्-भवति ! मा विषादेन । रामो हि,

प्रगृहीतमहाचापो वृतो वानरसेनया ।
समुद्धर्तुं दशग्रीवं लङ्कामेवाभियास्यति ॥ २३ ॥

सीता– किण्णु खु सिविणो मए दिट्ठो । भद्द ! अवि सच्चं । ण आणामि । [ किन्नु खलु स्वप्नो मया दृष्टः । भद्र ! अपि सत्यम् ।
२ न जानामि । ]

हनूमान्– ( स्वगतम् ) भोः ! कष्टम् ।

एवं गाढं परिज्ञाय भर्तारं भर्तृवत्सला ।
न प्रत्यायति शोकार्ता यथा देहान्तरं गता ॥ २४ ॥

( प्रकाशम् ) भवति ! अयमिदानीं,

समुदितवरचापबाणपाणिं पतिमिह राजसुते ! तवानयामि ।
भव हि विगतसंशया मयि त्वं नरवरपार्श्वगता विनीतशोका ॥२५॥

सीता–भद्द ! एदं मे अवत्थं सुणिअ अय्यउत्तो जह सोअपरवसो ण होइ, तह मे वुत्तन्तं भणेहि । [ भद्र ! एता मेऽवस्थां श्रुत्वार्यपुत्रो
३ यथा शोकपरवशो न भवति, तथा मे वृत्तान्तं भण । ]

हनूमान्–यदाज्ञापयति भवती ।

सीता–गच्छ, कय्यसिद्धी होदु । [ गच्छ, कार्यसिद्धिर्भवतु । ]

६ हनूमान्–अनुगृहीतोऽस्मि । ( परिक्रम्य ) कथमिदानीं ममागमनं रावणाय निवेदयामि । भवतु, दृष्टम् ।

परभृतगणजुष्टं पद्मषण्डाभिरामं
सुरुचिरतरुषण्डं तोयदाभं त्रिकूटम् ।
करचरणविमर्दैः काननं चूर्णयित्वा
विगतविषयदर्पं राक्षसेशं करोमि ॥ २६ ॥

( निष्क्रान्तौ )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति शङ्कुकर्णः )

शङ्कुकर्णः—क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ।

( प्रविश्य )

प्रतिहारी—अय्य ! अहं विजया । किं करीअदु । [ आर्य ! अहं विजया । किं क्रियताम् । ]

शङ्कुकर्णः—विजये ! निवेद्यतां निवेद्यतां महाराजाय लङ्केश्वराय—भग्नप्रायाशोकवनिकेति ! कुतः,

यस्यां न प्रियमण्डनापि महिषी देवस्य मण्डोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥ १ ॥

प्रतिहारी—अय्य ! णिच्चं भट्टिपादमूले वत्तमाणस्स जणस्स अदिट्ठपुरुवो अअं सम्भमो । किं एदं । [ आर्य ! नित्यं भर्तृपादमूले वर्तमानस्य जनस्यादृष्टपूर्वोऽयं संभ्रमः । किमेतद् । ]

शङ्कुकर्णः—भवति ! अतिपाति कार्यमिदम् । शीघ्रं निवेद्यतां निवेद्यताम् ।

प्रतिहारी—अय्य ! इयं णिवेदेमि । ( निष्क्रान्ता ) [ आर्य ! इयं निवेदयामि । ]

शङ्कुकर्णः—( पुरतो विलोक्य ) अये अयं महाराजो लङ्केश्वर इत एवाभिवर्तते । य एषः,

अमलकमलसन्निभोग्रनेत्रः
कनकमयोज्ज्वलदीपिकापुरोगः ।
त्वरितमभिपतत्यसौ सरोषो
युगपरिणामसमुद्यतो यथार्कः ॥ २ ॥

*यावदेषु ज्यैष्ठ्यं गत्वा गोपदारकाणां दारिकाणां व्याहरामि । गोमित्रक !* गोमित्रक ! ]

( प्रविश्य )

गोमित्रकः—मातुळ ! वन्दामि । [ मातुल ! वन्दे । ]

वृद्धगोपालकः—पन्ती होदु पन्ती होदु अम्हाअं गोधणप्प अ । अळे गोमित्तअ ! महाळाजप्प विळाडश्श वप्पवड्ढणगोप्पदाणणिमित्तं इमप्पिं णअळोववणवीहीए आअन्तु गोधणं पव्वे च किदमङ्गळमोदआ गोवदाळिआ अ । अळे गोमित्तअ ! गोवदाळआणं दाळिआणं वाहळ । [ शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च । अरे गोमित्रक ! महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायान्तु गोधनं सर्वे च कृतमङ्गलमोदका गोपदारका दारिकाश्च । अरे गोमित्रक ! गोपदारकाणां दारिकाणां व्याहर । ]

गोमित्रकः—जं मादुळो आणवेदि । गोळक्खिणिए ! घिदपिण्ड ! पामिणि ! वपभदत्त ! कुम्भदत्त ! महिपदत्त ! आअच्छह आअच्छह शिग्घं । [ यन्मातुल आज्ञापयति । गोरक्षिणिके ! घृतपिण्ड ! स्वामिनि ! वृषभदत्त ! कुम्भदत्त ! महिषदत्त ! आगच्छतागच्छत शीघ्रम् ।

( ततः प्रविशन्ति सर्वे । )

सर्वे—मादुळ ! वन्दामो । [ मातुल ! वन्दामहे । ]

वृद्धगोपालकः—पन्ती होदु पन्ती होदु अम्हाणं गोवदाळआणं । महाळाअप्प विळाडप्प वप्पवड्ढणगोप्पदाणणिमित्तं इमप्पिं णअळोपवणवीहीए आअन्तु गोधणं । वत्तअं वेळं गाअन्तो णच्चन्तो होम । [ शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोपदारकाणां दारिकाणां

च । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्या नगरोपवनवीथ्यामायातु गोधनम् । तावतीं वेलां गायन्तो नृत्यन्तो भवामः । ]

सर्वे–जं मादुलो आणवेदि । ( सर्वे नृत्यन्ति । ) [ यन्मातुल आज्ञापयति । ]

वृद्धगोपालकः–हीही पुठ्ठु णच्चिदम् , पुठ्ठु गाइदं । जाव अहं पि णच्चेमि । [ हीही सुष्ठु नर्तितं, सुष्ठु गीतं, यावदहमपि नृत्यामि । ]

सर्वे–हाहा मादुल ! अदिमहन्तं लेणुं उप्पदिदो । [ हाहा मातुल ! अतिमहान् रेणुरुत्पतितः । ]

वृद्धगोपालकः–ण हु लेणुं एव्वं, पंक्खुदुन्दुभिघोषं उप्पदिदो । [ न खलु रेणुरेव, शङ्खदुन्दुभिघोषः उत्पतितः । ]

सर्वे–दिवाचन्दप्पभापण्डुलजोह्णावगुण्ठिदो पदमण्डलु पुय्यो अत्थि अ णत्थि अ । [ दिवाचन्द्रप्रभापाण्डुरज्योत्स्नावगुण्ठितः शतमण्डलः सूर्योऽस्ति च नास्ति च । ]

गोमित्रकः–हाहा मादुल ! एदे के वि मणुप्पा दहिपिण्डपण्डरेहि छत्तेहि घोडअपअडिअं आलुहिअ पव्वं घोषुं विद्दवन्ति चोला । [ हाहा मातुल ! एते केऽपि मनुष्या दधिपिण्डपाण्डरैश्छत्रैर्घोटकशकटिकामारुह्य सर्वं घोषं विद्रवन्ति चोराः । ]

वृद्धगोपालकः–हीही परपंपादा उट्टिदा । दारआ ! दालिआ ! पिग्घं पक्कणं पविपह । [ हीही शरसंपाता उत्थिताः । दारकाः ! दारिकाः ! शीघ्रं पक्कणं प्रविशत । ]

सर्वे–जं मादुलो आणवेदि । ( निष्क्रान्ताः । ) [ यन्मातुल आज्ञापयति । ]

वृद्धगोपालकः–हाहा चिट्ठह चिट्ठह । पहरह पहरह । गह्णह गह्णह । इमं वुत्तन्तं महाराअविराडस्स णिवेदइस्पामो । [ हाहा तिष्ठत तिष्ठत ।

*प्रहरत प्रहरत । गृह्णीत गृह्णीत । इमं वृत्तान्तं महाराजविराटाय* निवेदयिष्यामः । ]

( निष्क्रान्तः । )

प्रवेशकः ।

---

( ततः प्रविशति भटः )

भटः—भोभो निवेद्यतां निवेद्यतां महाराजाय विराटेश्वराय— एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैह्रियन्ते गाव इति । तत्र हि,

द्रुतैश्च वत्सैर्व्यथितैश्च गोगणै-
निरीक्षणत्रस्तमुखैश्च गोवृषैः ।
कृतार्तनादाकुलितं समन्ततो
गवां कुलं शोच्यमिहाकुलाकुलम् ॥ १ ॥

इति ।

( नेपथ्ये )

किं धार्तराष्ट्रैरिति ।

भटः—आर्य ! अथ किम् ।

( प्रविश्य )

काञ्चुकीयः—सदृशमेतद् भ्रातृजनेष्वपि द्रोहिणाम् ।

सन्नैश्चापैर्बद्धगोधाङ्गुलित्रा
वर्मच्छन्नाः कल्पितस्यन्दनस्थाः ।
वीर्योत्सिक्ता युद्धसज्जाः कृतास्त्रा
राज्ञो वैरं गोषु निर्यातयन्ति ॥ २ ॥

जयसेन ! जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य वाचदकाल-निवेदनं मन्युमुत्पादयति । तस्मात् पुण्याहावसाने निवेदयिष्ये ।

३ भटः—आर्य ! अतिपाति कार्यमिदं, शीघ्रं निवेद्यताम्।

काञ्चुकीयः—इदं निवेद्यते।

(ततः प्रविशति राजा।)

६ राजा—

मा तावद् व्यथितविकीर्णबालवत्सा
गावो मे रथरवशङ्कया ह्रियन्ते।
पीनांसश्लथवलयः सचन्दनार्द्रो
निर्लज्जो मम च करः कराणि भुङ्क्ते ॥ ३ ॥

जयसेन ! जयसेन !

(प्रविश्य)

३ भटः—जयतु जयतु महाराजः।

राजा—अलं महाराजशब्देन। अवधूतं मे क्षत्रियत्वम्। उच्यतां रणविस्तरः।

६ भटः—न विस्तरार्हाणि विप्रियाणि। एष समासः,

एकवर्णेषु गात्रेषु गवां स्यन्दनरेणुना।
कशापातेषु दृश्यन्ते नानावर्णविभक्तयः ॥ ४ ॥

राजा—तेन हि,

धनुरुपनय शीघ्रं कल्प्यतां स्यन्दनो मे
मम गतिमनुयातु च्छन्दतो यस्य भक्तिः।
रणशिरसि गवार्थे नास्ति मोघः प्रयत्नो
निधनमपि यशः स्यान्मोक्षयित्वा तु धर्मः ॥ ५ ॥

भटः—यदाज्ञापयति महाराजः। (निष्क्रान्तः।)

राजा—भोः। किन्तु खलु दुर्योधनस्य मामन्तरेण वैरम्। आ यज्ञ-
१ मनुभवितुमागत इति। कथमनुभवामि। कीचकानां विना-

शेन वयमुन्नीतसन्तापाः संवृत्ताः । अथवा परोक्षमपि पाण्डवानां स्निग्ध इति । सर्वथा योद्धव्यम् । हस्तिनपुरनिवासाच्छीलज्ञो
६ भगवान् दुर्योधनस्य । अथवा,

कामं दुर्योधनस्यैष न दोषमभिधास्यति ।
अर्थित्वादपरिश्रान्तः पृच्छत्येव हि कार्यवान् ॥ ६ ॥

कोऽत्र ।

( प्रविश्य )

भटः–जयतु महाराजः ।

३ राजा–भगवांस्तावदाहूयताम् । ( निष्क्रान्तः । )

( ततः प्रविशति भगवान् । )

भगवान्–( सर्वतो विलोक्य ) भोः ! किन्नु खल्विदम् ।

गजेन्द्राः कल्प्यन्ते तुरगपतयो वर्मरचिताः
रथाः सानूकर्षाः कृतपरिकरा योधपुरुषाः ।
समुद्योगं दृष्ट्वा भयमननुभूतं स्पृशति मां
न खल्वात्मन्यस्तं कृतमतिरहं ते तु चपलाः ॥ ७ ॥

राजा–जयतु भगवान् जयतु । विराटो भगवन् ! अभिवादये ।

भगवान्–स्वस्ति ।

२ विराटः–भगवन् ! एतदासनमास्यताम् ।

भगवान्–( उपविश्य ) भो राजन् !

उद्योगः प्रस्तुतः कस्माच्छ्रीर्न सन्तोषमिच्छति ।
पीडयिष्यति सोत्सेकान् पीडितान् मोक्षयिष्यति ॥ ८ ॥

राजा–भगवन् । गोग्रहणादवमानितोऽस्मि ।

भगवान्–केन कारणेन ।

२ राजा–धार्तराष्ट्रैः ।

भगवान्–( आत्मगतम् ) भो. कष्टम्,

एकोदकत्वं खलु नाम लोके मनस्विनां कम्पयते मनांसि ।
वैरप्रियैस्तैर्हि कृतेऽपराधे यत्सत्यमस्माभिरिवापराद्धम् ॥ ९ ॥

विराट–भगवन् । किमिदानीं विचार्यते ।

भगवान्–न खलु किञ्चित् । तेषामुत्सुकः ।

३ राजा–अद्यप्रभृति निभृता भविष्यन्ति । यदि शक्तोऽपि युधिष्ठिरो मर्षयति, अहं न मर्षयामि ।

भगवान्–( आत्मगतम् )

अद्येदानीं पर्णशय्या च भूमौ राज्यभ्रंशो द्रौपदीधर्षणं वा ।
वेषान्यत्वं सश्रितानां निवासः सर्वं श्लाघ्यं यत्क्षमा ह्रायते मे ॥१०॥

( प्रविश्य )

भट–जयतु महाराजः ।

३ राजा–अथ किं चेष्टते दुर्योधनः ।

भट.–न खलु दुर्योधन एव, पृथिव्यां राजानः सर्वे प्राप्ता ।

द्रोणश्च भीष्मश्च जयद्रथश्च शल्योऽङ्गराजः शकुनिः कृपश्च ।
तेषां रथोत्कम्पचलत्पताकैर्भग्ना ध्वजैरेव वयं न बाणैः ॥ ११ ॥

राजा–( उत्थाय कृताञ्जलिः ) कथं तत्रभवान् गाङ्गेयोऽपि प्राप्तः ।

भगवान्–साधु धर्षितेनापि नातिक्रान्तः समुदाचारः । ( आत्म
३ गतम् ) भोः,

किमर्थं खलु सम्प्राप्तः कुरूणां गुरुरुत्तमः ।
शङ्के तीर्णा प्रतिज्ञेति स्मारणं क्रियते मम ॥ १२ ॥

( प्रकाशम् )

राजा–कोऽत्र ।

२ ( प्रविश्य )

भट–जयतु महाराजः ।

---

१. अत्र द्विशाणि वाक्यानि त्रुटितानि ।

विराटः—सूतस्तावदाहूयताम् ।

६ भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( प्रविश्य )

सूतः—जयत्वायुष्मान् ।

३ विराटः—

रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः ।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः ॥ १३ ॥

सूतः—यदाज्ञापयत्यायुष्मान् । आयुष्मन् !

रिपूणां सैन्यभेदेषु यस्ते परिचितो रथः ।
रथचर्यां बहिष्कर्तुं तमास्थायोत्तरो गतः ॥ १४ ॥

विराटः—कथं निर्यातः कुमारः ।

*भगवान्—भो राजन् ! संवार्यतां संवार्यतां कुमारः ।*

अगणितगुणदोषो युद्धतीक्ष्णश्च बाल्या-
न्न च दहति न कश्चित् सन्निकृष्टो रणाग्निः ।
अथ च परिहरन्ते धार्तराष्ट्रा न किञ्चि-
न्न खलु परिभवात् ते युद्धदोषान् ब्रवीमि ॥ १५ ॥

राजा—तेन हि शीघ्रमन्यो रथः कल्प्यताम् ।

सूतः—यदाज्ञापयत्यायुष्मान् ।

६ राजा—अथवा एहि तावत् ।

सूतः—आयुष्मन् ! अयमस्मि ।

राजा—

त्वमिदानीं कुमारस्य किं न वाहितवान् रथम् ।
अनुज्ञातोऽसि किं तेन न राज्ञां सारथिर्भवान् ॥ १६ ॥

सूतः-प्रसीदत्वायुष्मान् । रथं कल्पयित्वा तु सूतसमुदाचारेणोपस्थितः खल्वहम् । कुमारेण,

किन्नु तत्परिहासार्थं किन्नु तत्रास्ति कौशलम् ।
मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला ॥ १७ ॥

भगवान्-राजन् ! अलमलं सम्भ्रमेण ।

यदि स्वचक्रोद्धतरेणुदुर्दिनं
रथं समास्थाय गता बृहन्नला ।
परान् क्षणैर्नेमिरवैर्निवारयन्
विनापि बाणान् रथ एव जेष्यति ॥ १८ ॥

राजा-तेन हि शीघ्रमन्यो रथः कल्प्यताम् ।

सूतः-यदाज्ञापयत्यायुष्मान् ( निष्क्रान्तः । )

३ ( प्रविश्य )

भटः-भग्नः खलु कुमारस्य रथः ।

राजा-कथं भग्नो नाम ।

६ भटः- श्रोतुमर्हति महाराजः ।

बहुभिः समराभिज्ञैराच्छिन्नोऽश्वपथः परैः ।
भग्नो बाहनलोभेन[1] श्मशानाभिमुखो रथः ॥ १९ ॥

भगवान्-( आत्मगतम् ) आः अत्र खलु गाण्डीवम् । ( प्रकाशम् ) भो राजन् !

निमित्तं किञ्चिदुत्पन्नं श्मशानाभिमुखे रथे ।
धार्तराष्ट्राः स्थिता यत्र श्मशानं तद् भविष्यति ॥ २० ॥

राजा-भगवन् ! अकाले स्वस्थयास्त्वं मन्युमुत्पादयति ।

भगवान्-अलं मन्युना । कदाचिदनृतं लोकपूर्वम् ।

३ राजा-आ अस्त्येतत् । गच्छ मृगो ज्ञायतां वृत्तान्तः ।

१. गहनलोभेन ।

भटः– यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

राजा–

को नु खल्वेष सहसा कम्पयन्निव मेदिनीम् ।
नदीस्रोत इवाविद्धः क्षणात् संवर्तते ध्वनिः ॥ २१ ॥

ज्ञायतां शब्दः ।

( प्रविश्य )

३ भटः–जयतु महाराजः । श्मशानान्मुहूर्तविश्रान्ततुरगेण कुमारेण तु-

भगवान्–एष मामनृतवादिनं न कुर्यात् ।

भटः–

कृता नीला नागाः शरशतनिपातेन कपिला
हयो वा योधो वा न वहति न कश्चिच्छरशतम् ।
शरैः स्तम्भीभूताः शरपरिकराः स्यन्दनवराः
शरैश्छन्ना मार्गाः स्रवति धनुरुग्रां शरनदीम् ॥ २२ ॥

भगवान्–( आत्मगतम् )

एतदक्षयतूणीत्वं येन शक्रस्य खाण्डवे ।
यावन्तः पतिता धारास्तावन्तः प्रेषिताः शराः ॥ २३ ॥

राजा–अथ परेष्विदानीं को वृत्तान्तः ।

भटः–अप्रत्यक्षं हि तत्र मे । प्रवृत्तिपुरुषाः कथयन्ति––

धनुर्घोषं द्रोणस्तदिदमिति बुद्ध्वा प्रतिगतः
ध्वजे[1] बाणं दृष्ट्वा कृतमिति न भीष्मः प्रहरति ।
शरैर्भग्नः कर्णः किमिदमिति चान्ये नृपतयो
भयेऽप्येको बाल्यान्न भयमभिमन्युर्गणयति ॥ २४ ॥

भगवान्–कथमभिमन्युः प्राप्तः । भो राजन् !

१. स्वजे ।

युध्यर्ते यदि सौभद्रस्तेजोभिर्वंशयोर्द्वयोः ।
सारथिः प्रेष्यतामन्यो विक्लवात्र बृहन्नला ॥ २५ ॥

राजा–मा मा भवानेवम् ।

भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधं
कृत्वा कर्णजयद्रथौ च विमुखौ शेषांश्च तांस्तान् नृपान् ।
सौभद्रं स्वशरैर्न धर्षयति किं भीतः पितुः प्रलयात्
संसृष्टोऽपि वयस्वभावसदृशं तुल्यं वयो रक्षति ॥ २६ ॥

भटः–एष खलु कुमारस्य रथः,

आलम्बितो भ्रमति धावति तेन मुक्तो
न प्राप्य धर्षयति नेच्छति विप्रकर्तुम् ।
आसन्नभूमिचपलः परिवर्तमानो
योग्योपदेशमिव यस्य रथः करोति ॥ २७ ॥

राजा–गच्छ । भूयो ज्ञायतां वृत्तान्तः ।

भटः–यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । जयतु विराटेश्वरः । प्रियं निवेदये महाराजाय । अवजितं गोग्रहणम् । अपयाता धार्तराष्ट्राः ।

भगवान्–दिष्ट्या भवान् वर्धते ।

राजा–न न । भगवतो वृद्धिरेषा । अथ कुमार इदानीं क्व ।

भटः–दृष्टपरिस्पन्दानां योधपुरुषाणां कर्माणि पुस्तकमारोपयति कुमारः ।

राजा–अहो श्लाघनीयव्यापारः खल्वयं कुमारः ।

ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा ।
अकालान्तरिता पूजा नाशयत्येव वेदनाम् ॥ २८ ॥

अथ बृहन्नलेदानीं क्व ।

भटः-प्रियनिवेदनार्थमभ्यन्तरं प्रविष्टा ।

३ राजा-बृहन्नला तावदाहूयताम् ।

भटः-यदाज्ञापयति महाराजः ।

( ततः प्रविशति बृहन्नला । )

६ बृहन्नला- ( निरूप्य सविमर्शम् )

गाण्डीवेन मुहूर्तमाततगुणेनासीत् प्रतिस्पर्धितं
बाणानां परिवर्तनेष्वविशदा मुष्टिर्न मे संहता ।
गोधास्थानगता न चास्ति पटुता स्थाने हृतं सौष्ठवं
स्त्रीभावाच्छिथिलीकृतः परिचयादात्मा तु पश्चात् स्मृतः ॥२९॥

मया हि,

अनेन वेषेण नरेन्द्रमध्ये लज्जायमानेन धनुर्विकृष्टम् ।
यात्रा तु तावच्छरदुर्दिनेषु शीघ्रं निमग्नः कलुषश्च रेणुः ॥ ३० ॥

भो !

जित्वापि गां विजयमप्युपलभ्य राज्ञो
नैवास्ति मे जयगतो मनसि प्रहर्षः ।
दुःशासनं समरमूर्धनि सन्निगृह्य
बद्ध्वा यदद्य न विराटपुरं प्रविष्टः ॥ ३१ ॥

उत्तराप्रीतिदत्तालङ्कारेणालङ्कृतो व्रीडित इवास्मि राजानं द्रष्टुम् ।
तस्माद् विराटेश्वरं पश्यामि । अये ! अयमार्यो युधिष्ठिरः,

सयौवनः श्रेष्ठतपोवने रतो
नरेश्वरो ब्राह्मणवृत्तमाश्रितः ।
विमुक्तराज्योऽप्यभिवर्धितः श्रिया
त्रिदण्डधारी न च दण्डधारकः ॥ ३२ ॥

( उपगम्य ) भगवन् ! अभिवादये ।

भगवान्– स्वस्ति ।

२ बृहन्नला–जेदु भट्टा । [ जयतु भर्ता । ]

राजा–

अकारण रूपमकारण कुल
महत्सु नीचेषु च कर्म शोभते ।
इद हि रूप परिभूतपूर्वक
तदेव भूयो बहुमानमागतम् ॥ ३३ ॥

बृहन्नले । परिश्रान्तामपि भवतीं भूय परिश्रमयिष्ये । उच्यतां रणविस्तर ।

३ बृहन्नला– सुणादु भट्टा । [ शृणोतु भर्ता । ]

राजा–ऊर्जित कर्म । सस्कृतमभिधीयताम् ।

बृहन्नला–श्रोतुमर्हति महाराज ।

६ ( प्रविश्य )

भट –जयतु महाराज ।

राजा–

अपूर्व इव ते हर्षो ब्रूहि केनासि विस्मित ।

भट –

अश्रद्धेयं प्रियं प्राप्तं सौभद्रो ग्रहणं गत ॥ ३४ ॥

बृहन्नला–कथ गृहीत । ( आत्मगतम् । )

तुलितबलमिदं मयाद्य सैन्य
परिगणित च रणेऽद्य मे स दृष्ट ।
सदृश इह तु तेन नास्ति कश्चित्
क इह भवेन्निहतेषु कीचकेषु ॥ ३५ ॥

भगवान्–बृहन्नले । किमेतत् ।

बृहन्नला—भगवन् !

न जाने तस्य जेतारं बलवाञ्छिक्षितस्तु सः ।
पितॄणां भाग्यदोषेण प्राप्नुयादपि धर्षणम् ॥ ३६ ॥

राजा—कथमिदानीं गृहीतः ।

भटः—

रथमासाद्य निःशङ्कं बाहुभ्यामवतारितः ।

राजा—केन ।

भटः—

यः किलैष नरेन्द्रेण विनियुक्तो महानसे ॥ ३७ ॥

बृहन्नला—( अपवार्य ) एवमार्यभीमेन परिष्वक्तः, न गृहीतः ।

दूरस्था दर्शनादेव वयं सन्तोषमागताः ।
पुत्रस्नेहस्तु निर्दिष्टो येन सुव्यक्तकारिणा ॥ ३८ ॥

राजा—तेन सत्कृत्य प्रवेश्यतामभिमन्युः ।

भगवान्—भो राजन् ! वृष्णिपाण्डवनाथस्याभिमन्योः पूजां मया-
३ दिवि लोको ह्यास्यति । तदवधीरणमस्य न्याय्यम् ।

राजा—नावधीरणमर्हति यादवीपुत्रः । कुतः,

पुत्रो ह्येष युधिष्ठिरस्य तु वयस्तुल्यं हि नः सूनुना
सम्बन्धो द्रुपदेन नः कुलगतो नप्ता हि तस्माद् भवेत् ।
जामातृत्वमदूरतोऽपि च भवेत् कन्यापितृत्वं हि नः
पूजार्होऽप्यतिथिर्भवेत् स्वविभवैरिष्टा हि नः पाण्डवाः ॥३९॥

भगवान्—एवमेतत् । वक्तव्यं परिहर्तव्यं च ।

राजा—अथ केनायं प्रवेशयितव्यः ।

२ भगवान्—बृहन्नलया प्रवेशयितव्यः ।

राजा—बृहन्नले ! प्रवेश्यतामभिमन्युः ।

बृहन्नला–यदाज्ञापयति महाराज. । ( आत्मगतम् ) चिरस्य ख-
६ ल्वाकाङ्क्षितोऽयं नियोगो लब्धः ।

भगवान्–( आत्मगतम् )

अद्येदानीं यातु सन्दर्शनं वा शून्ये दृष्ट्वा गाढमालिङ्गनं वा ।
स्वैरं तावद् यातुमुद्राप्यतां वा मत्प्रत्यक्षं लज्जते ह्येष पुत्रम् ॥४०॥

राजा–पश्यतु भवान् कुमारस्य कर्म ।

नृपा भीष्मादयो भग्ना. सौभद्रो ग्रहणं गतः ।
उत्तरेणाद्य संक्षेपादर्थत पृथिवी जिता ॥ ४१ ॥

( तत· प्रविशति भीमसेनः । )

भीमसेनः–

आदीपिते जतुगृहे स्वभुजावसक्ता
मद्भ्रातरश्च जननी च मयोपनीताः ।
सौभद्रमेकमवतार्य रथात्तु बालं
तं च श्रमं प्रथममद्य समं हि मन्ये ॥ ४२ ॥

इत इत. कुमारः ।

( ततः प्रविशत्यभिमन्युः । )

अभिमन्यु – भोः । को नु खल्वेष',

विशालवक्षास्तनिमार्जितोदर:
स्थिरोन्नतांसोरुमहान् कटीकृशः ।
इहाहृतो येन भुजैकयन्त्रितो
बलाधिकेनापि न चास्मि पीडितः ॥ ४३ ॥

बृहन्नला–इत इतः कुमारः ।

अभिमन्यु·–अये अयमपर. कः,

अयुज्यमानैः प्रमदाविभूषणैः
करेणुशोभाभिरिवार्पितो गजः ।
लघुश्च वेषेण महानिवौजसा
विभात्युमावेषमिवाश्रितो हरः ॥ ४४ ॥

बृहन्नला–( अपवार्य ) इममिहानयता किमिदानीमार्येण कृतम् ।

अवजित इति तावद् दूषितः पूर्वयुद्धे
दयितसुतवियुक्ता शोचनीया सुभद्रा ।
जित इति पुनरेनं रुध्यते वासुभद्रो
भवतु बहु किमुक्त्वा दूषितो हस्तसारः ॥ ४५ ॥

भीमसेनः–अर्जुन !

बृहन्नला–अथ किमथ किमर्जुनपुत्रोऽयम्

२ भीमसेनः–( अपवार्य )

जानाम्येतान् निग्रहादस्य दोषान्
को वा पुत्रं मर्षयेच्छत्रुहस्ते ।
इष्टापत्त्या किन्तु दुःखे हि मग्ना
पश्यत्वेन द्रौपदीत्याहृतोऽयम् ॥ ४६ ॥

बृहन्नला–( अपवार्य ) आर्य ! अभिभाषणकौतूहलं मे महत् । वाचाल्यत्वेनमार्यः ।

३ भीमसेनः–बाढम् । अभिमन्यो !

अभिमन्युः–अभिमन्युर्नाम ।

भीमसेनः– रुष्यत्येष मया । त्वमेवैनमभिभाषय ।

६ बृहन्नला– अभिमन्यो !

अभिमन्युः–कथं कथम् । अभिमन्युर्नामाहम् । भोः !

नीचैरप्यभिभाष्यन्ते नामभिः क्षत्रियान्वयाः ।
इहायं समुदाचारो ग्रहणं परिभूयते ॥ ४७ ॥

बृहन्नला–अभिमन्यो ! सुखमास्ते ते जननी ।

अभिमन्युः– कथं कथम् । जननी नाम ।

किं भवान् धर्मराजो मे भीमसेनो धनञ्जयः ।
यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम् ॥ ४८ ॥

बृहन्नला–अभिमन्यो ! अपि कुशली देवकीपुत्रः केशवः ।

अभिमन्युः–कथं तत्रभवन्तमपि नाम्ना । अथ किम्, अथ किम् । कुशली भवता संसृष्टः ।

( उभौ परस्परमवलोकयतः । )

अभिमन्युः–कथमिदानीं सावज्ञमिव मां हस्यते ।

बृहन्नला–न खलु किञ्चित् ।

पार्थं पितरमुद्दिश्य मातुलं च जनार्दनम् ।
तरुणस्य कृतास्त्रस्य युक्तो युद्धपराजयः ॥ ४९ ॥

अभिमन्युः–

अलमात्मस्तवं कर्तुं नास्माकमुचितं कुले ।
हतेषु हि शरान् पश्य नाम नान्यद् भविष्यति ॥ ५० ॥

बृहन्नला–( आत्मगतम् ) सम्यगाह कुमारः ।

सरथतुरगदन्तनागयौघे
शरनिपुणेन न कश्चिदप्यविद्धः ।
अहमपि च परिक्षतो भवेयं
यदि न मया परिवर्तितो रथः स्यात् ॥ ५१ ॥

( प्रकाशम् ) एवं वाक्यशौण्डीर्यम् । किमर्थं तेन पदातिना गृहीतः ।

अभिमन्युः–

अशस्त्रो मामभिगतस्ततोऽस्मि ग्रहणं गतः ।
न्यस्तशस्त्रं हि को हन्यादर्जुनं पितरं स्मरन् ॥ ५२ ॥

भीमसेनः–

धन्यः खल्वर्जुनो येन प्रत्यक्षमुभयं श्रुतम् ।
पुत्रस्य च पितुः श्लाघ्यं सङ्ग्रामेषु पराक्रमः ॥ ५३ ॥

राजा–त्वर्यतां त्वर्यतामभिमन्युः ।

बृहन्नला–इत इतः कुमारः । एष महाराजः । उपसर्पतु कुमारः ।

अभिमन्युः–आः कस्य महाराजः ।

बृहन्नला–न न । ब्राह्मणेन सहास्ते ।

अभिमन्युः– ब्राह्मणेनेति । भगवन् ! अभिवादये ।

भगवान्–एह्येहि वत्स !

शौण्डीर्यं धृतिविनयं दयां स्वपक्षे
माधुर्यं धनुषि जयं पराक्रमं च ।
एकस्मिन् पितरि गुणानवाप्नुहि त्वं
शेषाणां यदपि च रोचते चतुर्णाम् ॥ ५४ ॥

राजा–एह्येहि पुत्र ! कथं न मामभिवादयसि । अहो उत्सिक्तः खल्वयं क्षत्रियकुमारः । अहमस्य दर्पप्रशमनं करोमि । अथ केनायं गृहीतः ।

भीमसेनः–महाराज ! मया ।

अभिमन्युः– अशस्त्रेणेत्यभिधीयताम् ।

भीमसेनः– शान्तं शान्तं पापम् ।

सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ ।
तावाश्रित्य प्रयुध्येयं दुर्बलैर्गृह्यते धनुः ॥ ५५ ॥

अभिमन्युः–मा तावद् भोः !

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ।
किं भवान् मध्यमस्तातस्तस्यैतत् सदृशं वचः ॥ ५६ ॥

भगवान्–पुत्र ! कोऽयं मध्यमो नाम ।

अभिमन्युः–श्रूयताम् । नन्वनुत्तरा वयं ब्राह्मणेषु, साध्वन्यो ब्रूयात् ।

राजा–भवतु भवतु । मद्वचनात् पुत्र ! कोऽयं मध्यमो नाम ।

अभिमन्युः–श्रूयताम् । येन,

तुलयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ।
असह्यकर्म तत् कृत्वा नीतः कृष्णोऽतदर्हताम् ॥ ५७ ॥

राजा–

न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ।
किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति ॥ ५८ ॥

अभिमन्युः–यद्यहमनुमाह्यः,

पादयोः समुदाचारः क्रियतां निग्रहोचितः ।
बाहुभ्यामाहृतं भीमो बाहुभ्यामेव नेष्यति ॥ ५९ ॥

( ततः प्रविशत्युत्तरः । )

उत्तर.–

मिथ्याप्रशंसा खलु नाम कष्टा येषां तु मिथ्यावचनेषु भक्तिः ।
अहं हि युद्धाश्रयमुच्यमानो वाचानुवर्ती हृदयेन लज्जे ॥ ६० ॥

( उपसृत्य ) भगवन् ! अभिवादये ।

भगवान्–स्वस्ति ।

उत्तर.–तात ! अभिवादये ।

राजा–एह्येहि पुत्र ! आयुष्मान् भव । पुत्र ! पूजिताः कृतकर्माणो योधपुरुषाः ।

उत्तर.–पूजिताः । पूज्यतमस्य क्रियतां पूजा ।

राजा–पुत्र ! कस्मै ।

उत्तरः–इहात्रभवते धनञ्जयाय ।

९ राजा–कथं धनञ्जयायेति ।

उत्तरः–अथ किम् । अत्रभवता,

श्मशानाद्धनुरादाय तूणी चाक्षयसायके ।
नृपा भीष्मादयो भग्ना वयं च परिरक्षिताः ॥ ६१ ॥

बृहन्नला–प्रसीदतु प्रसीदतु महाराजः ।

अयं बाल्यात्तु सम्भ्रान्तो न वेत्ति प्रहरन्नपि ।
कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति ॥ ६२ ॥

उत्तरः–व्यपनयतु भवाञ्छङ्काम् । इदमाख्यास्यते,

प्रकोष्ठान्तरसङ्गूढं गाण्डीवज्याहतं किणम् ।
यत्तद् द्वादशवर्षान्ते नैव याति सवर्णताम् ॥ ६३ ॥

बृहन्नला–

एतन्मे पारिहार्याणां व्यावर्तनकृतं किणम् ।
सन्निरोधविवर्णत्वाद् गोधास्थानमिहागतम् ॥ ६४ ॥

राजा–पश्यामस्तावत् ।

बृहन्नला–

रुद्रबाणावलीढाङ्गो यद्यहं भारतोऽर्जुनः ।
अव्यक्तं भीमसेनोऽयमयं राजा युधिष्ठिरः ॥ ६५ ॥

राजा–भो धर्मराज ! वृकोदर ! धनञ्जय ! कथं न मां विश्वसिथ ।
भवतु भवतु प्राप्तकाले । बृहन्नले ! प्रविश त्वमभ्यन्तरम् ।

१ बृहन्नला–यदाज्ञापयति महाराजः ।

भगवान्–अर्जुन ! न खलु न खलु प्रवेष्टव्यम् । तीर्णप्रतिज्ञा वयम् ।

अर्जुनः–यदाज्ञापयत्यार्यः ।

६ राजा–

शूराणां सत्यसन्धानां प्रतिज्ञां परिरक्षताम् ।
पाण्डवानां निवासेन कुलं मे नष्टकल्मषम् ॥ ६६ ॥

अभिमन्युः–इहात्रभवन्तो मे पितरः । तेन खलु,

न रुष्यन्ति मया क्षिप्ता हसन्तश्च क्षिपन्ति माम् ।
दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिताः ॥ ६७ ॥

( भीमसेनमुद्दिश्य ) भोस्तात !

अज्ञानात्तु मया पूर्वं यद् भवान् नाभिवादितः ।
तस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥ ६८ ॥

भीमसेनः–एह्येहि पुत्र ! पितृसदृशपराक्रमो भव । पुत्र ! अभिवादयस्व पितरम् ।

२ अभिमन्युः–भोस्तात ! अभिवादये ।

अर्जुनः–एह्येहि पुत्र !

अयं स हृदयह्लादी पुत्रगात्रसमागमः ।
यत्तद् द्वादशवर्षान्ते प्रोषितः पुनरागतः ॥ ६९ ॥

पुत्र ! अभिवाद्यतां विराटेश्वरः ।

अभिमन्युः–अभिवादये ।

३ राजा–एह्येहि वत्स !

यौधिष्ठिरं धैर्यमवाप्नुहि त्वं भैमं बलं नैपुणमर्जुनस्य ।
माद्रीसुतात् कान्तिमथाभिरूप्यं कीर्तिं च कृष्णस्य जगत्प्रियस्य॥७०॥

( आत्मगतम् ) उत्तरासन्निकर्षस्तु मां बाधते । किमिदानीं करिष्ये । भवतु दृष्टम् । कोऽत्र ।

३ ( प्रविश्य )

भटः–जयतु महाराजः ।

राजा–आपस्तावत् ।

६ भटः–यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) इमा आपः ।

राजा–अर्जुन ! गोग्रहणविजयशुल्कार्थं प्रतिगृह्यतामुत्तरा ।

भगवान्–एतदवनतं शिरः ।

९ अर्जुनः–कथं चारित्रं मे तुलयति । भो राजन् !

इष्टमन्तःपुरं सर्वं मातृवत् पूजितं मया ।
उत्तरैषा त्वया दत्ता पुत्रार्थे प्रतिगृह्यते ॥ ७१ ॥

भगवान्–एतदुन्नतं शिरः ।

राजा–भवतु पितामहसकाशमुत्तरं प्रेषयामः । धर्मराज ! वृकोदर !

३ धनञ्जय ! इत इतो भवन्तः ।

( निष्क्रान्ताः सर्वे । )

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशति भटः । )

३ भटः–भो भोः ! निवेद्यतां निवेद्यतां सर्वक्षत्राचार्यपुरोगाणां क्षत्रियाणाम् । एष हि,

आपस्य नारायणचक्रजं भयं
चिरप्रनष्टान् परिभूय बान्धवान् ।
धनुःसहायैः कुरुभिर्न रक्षितो
हतोऽभिमन्युः क्रियतां व्यपत्रपा ॥ १ ॥

इति ।

( ततः प्रविशतो भीष्मद्रोणौ । )

द्रोणः–सूत ! कथय कथय ।

रणभुव उपनीतः केन मे शिष्यपुत्रः
क इह मम शरैस्तैर्दैवतैर्योद्धुकामः ।
कथय पुरुषसारं यावदस्त्रं बलं वा
वलरत इव दूतांस्तत्र सम्प्रेषयामि ॥ २ ॥

भीष्म –सूत ! कथय कथय ।

भग्नापयानेष्वनभिज्ञदोपस्तारुण्यभावेन विलम्बमानः ।
केनैष हस्तिग्रहणोद्यतेन यूथे प्रयाते कलभो गृहीतः ॥ ३ ॥

( ततः प्रविशति दुर्योधनः कर्णः शकुनिश्च । )

दुर्योधनः–सूत ! कथय कथय । केनापनीतोऽभिमन्युः । अहमेवैनं मोक्षयामि । कुतः,

मम हि पितृभिरस्य प्रस्तुतो ज्ञातिभेद-
स्तदिह मम च दोषो वक्तृभिः पातनीयः ।
अथ च मम स पुत्रः पाण्डवानां तु पश्चात्
सति च कुलविरोधे नापराध्यन्ति बालाः ॥ ४ ॥

कर्णः–अतिस्निग्धमनुरूपं चाभिहितम् । गान्धारीमातः !

मा तावत् स्वजनधिया तु बालभावाद्
व्यापन्नः समरमुखे तव प्रियार्थम् ।
अस्माभिर्न च परिरक्षितोऽभिमन्यु-
र्गृह्णन्तां धनुरपनीय वल्कलानि ॥ ५ ॥

शकुनिः– बहुनाथः खलु सौभद्रः । मुक्त एवेति सम्प्रधार्यताम् । कुतः,

मुञ्चेदर्जुनपुत्र इत्यनगतो राजा विराटः स्वयं
स्मृत्वा चाय रणाजिरादपगतं मुञ्चेत् स दामोदरम् ।
क्रोधोद्भूतहलात् प्रलम्बमथनाद् भीतेन मुच्येत वा
भीमस्त्वेनमिहानयेद् बलमहान् हत्वा रिपूनूर्जितान् ॥६॥

१. रणभुवमुपनीत. ।

द्रोणः–सूत ! कथय कथय । कथमिदानीं गृहीतः ।

पर्यस्तोऽस्य रथो हया नु चपलाश्चक्राक्षमा मेदिनी
तूणी क्षीणशरे त्वमस्य विगुणो ज्याच्छेदवन्ध्यं धनुः ।
एता दैवकृता भवन्ति रथिनां युद्धाश्रया व्यापदो
बाणैरप्यवकृष्यते खलु परैः स्वाधीनशिक्षस्तु सः ॥७॥

सूतः–आयुष्मन् ! परुषमयो धनुर्वेदः । किमायुष्मता न ज्ञायते ।

न चापि दोषा भवताभिभाषिताः
स चापि बाणौघमयो महारथः ।
[1]अलातचक्रप्रतिमस्तु मे रथो
गृहीत एवापतता पदातिना ॥ ८ ॥

सर्वे–कथं पदातिनेति । अथ कीदृशः स पदातिः ।

सूतः–किमभिधास्यामि रूपं वा पराक्रमं वा ।

भीष्मः–रूपेण स्त्रियः कथ्यन्ते । पराक्रमेण तु पुरुषाः । तत् पराक्रमोऽस्याभिधीयताम् ।

सूतः–आयुष्मन् !

दुर्योधनः–

किमर्थं स्तूयते कोऽपि भवता गर्विताक्षरैः ।
कथ्यतां नास्ति मे त्रासो यद्येष पवनो जवे ॥ ९ ॥

सूतः–श्रोतुमर्हति महाराजः । तेन खलु,

लङ्घयित्वा जवेनाश्वान् न्यस्त आपस्करे करः ।
प्रसारितहयग्रीवो निष्कम्पश्च रथः स्थितः ॥ १० ॥

भीष्मः–तेन हि न्यस्यन्तामायुधानि ।

सर्वे–किमर्थम् ।

---

१. अवातचक्र ।

भीष्मः—

हृतप्रवेगो यदि वा[1] न वा रथो
　वृकोदरस्याङ्कगतः स चिन्त्यताम् ।
पुरा हि तेन द्रुपदात्मजां हरन्
　पदातिनैवावजितो जयद्रथः ॥ ११ ॥

द्रोणः—सम्यगाह गाङ्गेयः । बाल्योपदेशात् प्रभृत्यहं तस्य जवमवगच्छामि । इष्वस्त्रशालायां हि,

कर्णायते तेन शरे विमुक्ते
　विकम्पितं तस्य शिरो मयोक्तम् ।
गत्वा तदा तेन च बाणतुल्य-
　मप्राप्तलक्ष्यः स शरो गृहीतः ॥ १२ ॥

शकुनिः—अहो हास्यमभिधानम् ।

नास्त्यन्यो बलवाँल्लोके सर्वमिष्टेषु कथ्यते ।
जगद्व्याप्तान् भवन्तः किं सर्वे पश्यन्ति पाण्डवान् ॥ १३ ॥

भीष्मः—गान्धारराज ! सर्वमनुमानात् कथ्यते ।

वयं व्यपाश्रित्य रणं प्रयामः शस्त्राणि चापानि रथाधिरूढाः ।
द्वावेव दोर्भ्यां समरे प्रयातौ हलायुधश्चैव वृकोदरश्च ॥ १४ ॥

शकुनिः—एकेनैव वयं भग्नाः सहसा साहसप्रियाः ।
　उत्तरं च तमप्येके कथयिष्यन्ति फल्गुनम् ॥ १५ ॥

द्रोणः—भो गान्धारराज ! अत्रापि तावद् भवतः सन्देहः ।

किमुत्तरेणापि रणे विकृष्यते
　निसृष्टशुष्काशनिगर्जितं धनुः ।
किमुत्तरस्यापि शरैर्हतातपः
　कृतो मुहूर्तास्तमितो दिवाकरः ॥ १६ ॥

---

१. बाहुना ।

भीष्मः—गान्धारीमातः ! विस्पष्टं खलु कथ्यते । ननु जानीते भवान् ।

वाणपुङ्खाक्षरैर्वाक्यैर्ज्याजिह्वापरिवर्तिभिः ।
विक्रुष्टं खलु पार्थेन न च श्रोत्रं प्रयच्छति ॥ १७ ॥

( प्रविश्य )

सूतः—जयत्वायुष्मान् । शान्तिकर्मानुष्ठीयताम् ।

१ भीष्मः—किमर्थम् ।

सूतः—

उचितं ते पुरा कर्तुं ध्वजे वाणप्रधर्षिते ।
अयं हि वाणः कस्यापि पुङ्खे नामाभिधीयते ॥ १८ ॥

भीष्मः—आनय ।

( सूत उपनयति । )

भीष्मः—( गृहीत्वा निरीक्ष्य ) वत्स ! गान्धारराज ! जराशिथिलं मे चक्षुः । वाच्यतामयं शरः ।

शकुनिः—( गृहीत्वानुवाच्य ) अर्जुनस्य । ( इति क्षिपति । द्रोणस्य पादयोः पतति । )

द्रोणः—( शरं गृहीत्वा ) एह्येहि वत्स !

एष शिष्येण मे क्षिप्तो गाङ्गेयं वन्दितुं शरः ।
पादयोः पतितो भूमौ मां क्रमेणाभिवन्दितुम् ॥ १९ ॥

शकुनिः—

यौधः स्यादर्जुनो नाम तेनायं चोज्झितः शरः ।
लिखितं चोत्तरेणापि प्रकाशमुपनीयताम् ॥ २० ॥

दुर्योधनः—

तेषां राज्यप्रदानार्थमनृतं कथ्यते यदि ।
राज्यस्यार्धं प्रदास्यामि यावद् दृष्टे युधिष्ठिरे ॥ २१ ॥

( प्रविश्य )

भटः—जयतु महाराजः । विराटनगराद् दूतः प्राप्तः ।

दुर्योधनः—प्रवेश्यताम् ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

( ततः प्रविशत्युत्तरः । )

उत्तरः—

अध्वानमल्पमतिमुक्तजवैस्तुरङ्गै-
रागच्छता पथि रथेन विलम्बितं मे ।
कौन्तेयबाणनिहतैर्द्विरदैः समन्ताद्
दुःखेन यान्ति तुरगा विषमा हि भूमिः ॥ २२ ॥

( प्रविश्य कृताञ्जलिः ) भो भो ! आचार्यपितामहपुरोगं सर्व-राजमण्डलमभिवादये ।

सर्वे—आयुष्मान् भव ।

द्रोणः—किमाह तत्रभवान् विराटेश्वरः ।

उत्तरः—नाहं तत्रभवता प्रेषितः ।

द्रोणः—अथ केन त्वं प्रेषितः ।

उत्तरः—तत्रभवता युधिष्ठिरेण ।

द्रोणः—किमाह धर्मराजः ।

उत्तरः—श्रूयताम् ,

उत्तरा मे स्नुषा लब्धा प्रतीक्षे राजमण्डलम् ।
तत्रैव किमिहैवास्तु विवाहः क्व प्रवर्तताम् ॥ २३ ॥

शकुनिः—तत्रैव तत्रैव ।

द्रोणः—

इत्यर्थं वयमानीताः पञ्चरात्रोऽपि वर्तते ।
धर्मेणावर्जिता भिक्षा धर्मेणैव प्रदीयताम् ॥ २४ ॥

दुर्योधनः—

बाढं दत्तं मया राज्यं पाण्डवेभ्यो यथापुरम् ।
मृतेऽपि हि नराः सर्वे सत्ये तिष्ठन्ति तिष्ठति ॥ २५ ॥

द्रोणः—

हन्त सर्वे प्रसन्नाः स्मः प्रवृद्धकुलसङ्ग्रहाः ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २६ ॥

( निष्क्रान्ताः सर्वे । )

## तृतीयोऽङ्कः ।

अवसितं पञ्चरात्रम् ।

---

# श्लोकानुक्रमणिका।

# मध्यमव्यायोगस्य कथावस्तु ।

अथ कदाचिद् दारपुत्रत्रयानुयातः कश्चिद् वृद्धो ब्राह्मणो हिडिम्बावने घटोत्कचेन भीमसेनसूनुना रुद्धोऽभूत । 'मन्मातुर्हिडिम्बाया उपवासनिसर्गार्थं त्रिषु पुत्रेषु त्वमेकं विसर्जय' इति तेनोक्तो द्वितीय पुत्रं मध्यमनामानं पितृभ्रातृवत्सलं विसर्जयामास । अथ पिपासाप्रतीकारार्थमदूरवर्तिनं कमपि जलाशयं राक्षसानुमत्या गतश्चिरायमाणो मातुराहारकालातिक्रमशङ्कया "भो मध्यम शीघ्रमागच्छ" इति उच्चैरसकृत् तेनाहूतः । ततः पाण्डवमध्यमो भीम आत्मानमेव मध्यमनाम्नाहूयमानं मत्वा तस्मिन् देशे प्राप्तः सन् वृद्धेनामर्यं याचितः । ततो भीम आत्मानमेव राक्षसानुगामिनं प्रतिज्ञाय ब्राह्मणपुत्रं मध्यमं राक्षसान्मोचयामास । अथ स्वपुत्रस्य घटोत्कचस्य बलपरीक्षणेच्छया तमवोचत् "शक्तश्चेद् बलात्कारेण मा नय" । तत्र युद्धे पराजेतुमशक्नुवता राक्षसेन पूर्वसमयं स्मारितो भीमसेनस्तमनुसरन् हिडिम्बाया अन्तिकमाससाद । तत्र हिडिम्बया भार्योचितसमुदाचारेण सम्भावितः । घटोत्कचोऽपि मातृवाक्यात्तमात्मनः पितरं विज्ञाय तमभ्यवादयत । भीमश्च तं परिष्वज्याशिषाभिननन्द ।

## पात्राणि ।

पुरुषाः—

वृद्धः—ब्राह्मणः केशवदासनामा ।

प्रथमः—वृद्धस्य ज्येष्ठः पुत्रः ।

द्वितीयः—वृद्धस्य द्वितीयः पुत्रो मध्यमनामा ।

तृतीयः—वृद्धस्य कनिष्ठः पुत्रः ।

घटोत्कचः—राक्षसो हिडिम्बाभीमसेनयोः सूनुः ।

भीमसेनः—मध्यमः कुन्तीपुत्रः ।

स्त्रियः—

ब्राह्मणी—वृद्धस्य भार्या ।

हिडिम्बा—राक्षसी भीमसेनस्य पत्नी ।

॥ श्रीः ॥

भासनाटकचक्रे

# मध्यमव्यायोगः ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः-

पायात्स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखड्गनीलः ।
यः प्रोद्यतस्त्रिभुवनैक्रमणे रराज
वैडूर्यसङ्क्रम इवाम्बरसागरस्य ॥ १ ॥

एवमार्यमिश्रान्विज्ञापयामि । अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग पश्यामि ।

१ ( नेपथ्ये )

भोस्तात ! को नु खल्वेष ।

सूत्रधारः-भवतु, विज्ञातम् ।

भोः शब्दोच्चारणादस्य ब्राह्मणोऽयं न संशयः ।
त्रास्यते निर्विशङ्केन केनचित्पापचेतसा ॥ २ ॥

( पुनर्नेपथ्ये )

भोस्तात ! को नु खल्वेषः ।

२ सूत्रधार-हन्त दृष्टं विज्ञातं । एष खलु पाण्डवमध्यमस्यात्मजो हिडिम्बारणिसम्भूतो राक्षसामिरकृतवैरं ब्राह्मणजनं वित्रासयति । भोः कष्टम् । अत्र हि

---

१. °भुवनैकमणे । २. कष्ट कष्ट खलु पत्नीसुतपरिवृतस्य ब्राह्मणस्य

श्रान्तैः सुतैः परिवृतस्तरुणैः सदारैः
वृद्धो द्विजो निशिचरानुचरः स एषः ।
व्याघ्रानुसारचकितो वृषभः सधेनुः
सन्त्रस्तवत्सक इवाकुलतामुपैति ॥ ३ ॥

( निष्क्रान्ताः । )

स्थापना ।

३ ( ततः प्रविशति सुतत्रयकलत्रपरिवृतो ब्राह्मणः पृष्ठतो घटोत्कचश्च । )

ब्राह्मणः— भोः को नु खल्वेषः ।

तरुणरविकरप्रकीर्णकेशो भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः ।
सतडिदिव घनः सकण्ठसूत्रो युगनिधने प्रतिमाकृतिर्हरस्य ॥४॥

प्रथमः—भोस्तात ! को नु खल्वेषः ।

मधुयुगलनिभाक्षः पीनविस्तीर्णवक्षाः
कनककपिलकेशः पीनकौशेयवासाः ।
तिमिरनिवहवर्णः पाण्डरोद्वृत्तदंष्ट्रो
नव इव जलगर्भो लीयमानेन्दुलेखः ॥ ५ ॥

द्वितीयः—क एष भोः !

कलभदशनदंष्ट्रो लाङ्गलाकारनासः
करिवरकरबाहुर्नीलजीमूतवर्णः ।
हुतहुतवहदीप्तो य स्थितो भाति भीम-
स्त्रिपुरपुरनिहन्तुः शङ्करस्येव रोषः ॥ ६ ॥

तृतीयः—भोस्तात ! को नु खल्वयमस्मान्पीडयति ।

---

१. भान्तैः । २. सरोषः । ३. व्याघ्रानुचारचकितो, व्याघ्रानुसारचरितो ।

वज्रपातोऽचलेन्द्राणां श्येनः सर्वपतत्रिणाम् ।
मृगेन्द्रो मृगसंघानां मृत्युः पुरुषविग्रहः ॥ ७ ॥

ब्राह्मणी–अय्य को एसो अम्हाअं सन्दावेइ । [ आर्य ! क एषोऽस्मान् सन्तापयति । ]

२ घटोत्कचः–भो ब्राह्मण ! तिष्ठ तिष्ठ ।

किं यासि मद्भयविनाशितधैर्यसारो
वित्रस्तदारसुतरक्षणहीनशक्ते ! ।
तार्क्ष्योग्र्यपक्षपवनोद्धतरोषवह्नि-
तीव्र' कलत्रसहितो भुजगो यथार्तः ॥ ८ ॥

भो ब्राह्मण ! न गन्तव्यं न गन्तव्यम् ।

वृद्धः–ब्राह्मणि ! न भेतव्यम् । पुत्रकाः न भेतव्यम् । सविमर्शा
२ ह्यस्य वाणी ।

घटोत्कचः–भोः ! कष्टम् ।

जानामि सर्वत्र सदा च नाम द्विजोत्तमाः पूज्यतमाः पृथिव्याम् ।
अकार्यमेतच्च गयाद्य कार्यं मातुर्नियोगादपनीय शङ्काम् ॥ ९ ॥

वृद्धः–ब्राह्मणि ! किं न स्मरसि तत्रभवता जलक्लिन्नेन मुनिनोक्तं-अनपेतराक्षसमिदं वनमप्रमादेन गन्तव्यमिति । तदेवोत्पन्नं भयम् ।

३ ब्राह्मणी–किं दाणि अय्यो मज्झत्थवण्णो विअ दिस्सदि । [ किमिदानीमार्यो मध्यस्थवर्ण इव दृश्यते । ]

वृद्ध –किं करिष्यामि मन्दभाग्यः ।

६ ब्राह्मणी–णं विक्कोसामो । [ ननु विक्रोशामः । ]

प्रथमः–भवति कस्य वयं विक्रोशामः ।

---

१. भुजङ्गानाम् । २. अपनीतशङ्कम् ।

इदं हि शून्यं तिमिरोत्करप्रभैर्नगप्रकारैरवरुद्धदिक्पथम् ।
खगैर्मृगैश्चापि समाकुलान्तरं वनं निवासाभिमतं मनस्विनाम् ॥१०॥

वृद्धः—ब्राह्मणि ! न भेतव्यं, न भेतव्यम् । मनस्विजननिवासयोग्यमिति श्रुत्वा विगत इव मे संत्रासः । शङ्के नातिदूरेण पाण्डवाश्रमेण भवितव्यं । पाण्डवास्तु,

युद्धप्रियाश्च शरणागतवत्सलाश्च
दीनेषु पक्षपतिताः कृतसाहसाश्च ।
एवंविधप्रतिभयाकृतिचेष्टितानां
दण्डं यथार्हमिह धारयितुं समर्थाः ॥ ११ ॥

प्रथमः—भोस्तात ! न तत्र पाण्डवा इति मन्ये ।

वृद्धः—कथं त्वं जानीषे ।

प्रथमः—श्रुतं मया तस्मादागच्छता केनचिद्ब्राह्मणेन शतकुम्भं नाम यज्ञमनुभवितुं महर्षेर्धौम्यस्याश्रमं गता इति ।

वृद्धः—हन्त हताःस्मः ।

प्रथमः—तात ! न तु सर्व एव । आश्रमपरिपालनार्थमिह स्थापितः किल मध्यमः ।

वृद्धः—यद्येवं सन्निहिताः सर्वे पाण्डवाः ।

प्रथमः—स चाप्यस्यां वेलायां व्यायामपरिचयार्थं विप्रकृष्टदेशस्थ इति श्रूयते ।

वृद्धः—हन्त निराशाः स्मः । भवतु पुत्र व्यपाश्रयिष्ये तावदेनम् ।

प्रथमः—अलमलं परिश्रमेण ।

वृद्धः—पुत्र ! निर्वेदप्रत्यर्थिनी खलु प्रार्थना । भवतु पश्यामस्तावत् । भो भोः पुरुष ! अस्त्यस्माकं मोक्षः ।

---

१. नात्यतिदूरेण । २. 'कथितं' इति विवर्धितं भाति । ३. व्यपाश्रयिष्ये ।

घटोत्कचः–मोक्षोऽस्ति समयतः ।

वृद्धः–कः समयः ।

घटोत्कचः–अस्ति मे तत्रभवती जननी । तयाहमाज्ञप्तः । पुत्र ! ममोपवासनिसर्गार्थमस्मिन्वनप्रदेशे कश्चिन्मानुषः प्रतिगृह्यानेतव्य इति । ततो मयासादितो भवान् ।

पत्न्या चारित्रशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥ १२ ॥

वृद्धः–हं भो राक्षसापसद ! किमहमब्राह्मणः ।

ब्राह्मणः श्रुतवान्वृद्धः पुत्रं शीलगुणान्वितम् ।
पुरुषादस्य दत्वाहं कथं निर्वृतिमाप्नुयाम् ॥ १३ ॥

घटोत्कचः–

यथार्थितो द्विजश्रेष्ठ ! पुत्रमेकं न मुञ्चसि ।
सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि ॥ १४ ॥

वृद्धः–एष एव मे निश्चयः ।

कृतकृत्यं शरीरं मे परिणामेन जर्जरम् ।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥ १५ ॥

ब्राह्मणी–अय्य ! मा मा एवं । पदिमत्तधम्मिणी पदिव्वदत्ति णाम । गहीदफलेण एदिणा सरीरेण अय्यं कुलं च रक्खिदुमिच्छामि ।

[ आर्य, मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेन शरीरेणार्यं कुलं च रक्षितुमिच्छामि । ]

घटोत्कच.–भवति ! न खलु स्त्रीजनोऽभिमतस्तत्रभवत्या ।

वृद्धः–अनुगमिष्यामि भवन्तम् ।

घटोत्कचः–आः वृद्धस्त्वमपसर ।

---

१. परिगृह्य । २. किमहं श्रुतवान् ।

प्रथमः—भोस्तात ! ब्रवीमि खलु तावत्किंचित् ।

१ वृद्धः—ब्रूहि ब्रूहि शीघ्रम् ।

प्रथमः—

मम प्राणैर्गुरुप्राणानिच्छामि परिरक्षितुम् ।
रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मां भवान् ॥ १६ ॥

द्वितीयः—आर्य ! मा मैवम् ।

ज्येष्ठः श्रेष्ठः कुले लोके पितॄणां च सुसंप्रियः ।
ततोऽहमेव यास्यामि गुरुवृत्तिमनुस्मरन् ॥ १७ ॥

तृतीयः—आर्यौ ! मा मैवम् ।

ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः ।
ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम् ॥ १८ ॥

प्रथमः—वत्स ! मा मैवम् ।

आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्यते ।
ततोऽहमेव यास्यामि गुरूणां प्राणरक्षणात् ॥ १९ ॥

वृद्धः—ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम् ।

ब्राह्मणी—जह अय्यो ज्येष्ठमिच्छदि तह अहं पि कणिट्ठमिच्छामि ।

२ [ यथार्यो ज्येष्ठमिच्छति तथाहमपि कनिष्ठमिच्छामि । ]

द्वितीयः—पित्रोरनिष्टः कस्येदानीं प्रियः ।

घटोत्कचः—अहं प्रीतोऽस्मि । शीघ्रमागच्छ ।

द्वितीयः—धन्योऽस्मि यद् गुरुप्राणाः स्वैः प्राणैः परिरक्षिताः ।
बन्धुस्नेहाद्धि महतः कायस्नेहस्तु दुर्लभः ॥ २० ॥

घटोत्कचः—अहो स्वजनवात्सल्यमस्य ब्राह्मणबटोः ।

द्वितीयः—भोस्तात ! अभिवादये ।

---

१. °मनुस्मर । २. धार्यते । ३. कालस्नेहस्तु ।

३ वृद्धः—एह्येहि पुत्र ।

विनिमाय गुरुप्राणान् स्वैः प्राणैर्गुरुवत्सल ।
अकृतात्मदुरावापं ब्रह्मलोकमवाप्नुहि ॥ २१ ॥

द्वितीयः—अनुगृहीतोऽस्मि । अम्ब ! अभिवादये ।

ब्राह्मणी—जाद ! चिरं जीव । [ जात ! चिरं जीव । ]

३ द्वितीयः—अनुगृहीतोऽस्मि । आर्य ! अभिवादये ।

प्रथमः—एह्येहि वत्स ।

परिष्वजस्व गाढं मां परिष्वक्तः शुभैर्गुणैः ।
कीर्त्या तव परिष्वक्ता भविष्यति वसुन्धरा ॥ २२ ॥

द्वितीयः—अनुगृहीतोऽस्मि ।

तृतीयः—आर्य ! अभिवादये ।

३ द्वितीयः—स्वस्ति ।

तृतीयः—अनुगृहीतोऽस्मि ।

द्वितीयः—भोः पुरुष ! किंचिद् ब्रवीमि ।

६ घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

द्वितीयः—एतस्मिन्वनान्तरे जलाशय इव दृश्यते । तत्र मे प्रकल्पित-परलोकस्य पिपासाप्रतीकारं करिष्यामि ।

९ घटोत्कचः—दृढव्यवसायिन् ! गम्यताम् । अतिक्रामति मातुराहार-काल । शीघ्रमागच्छ ।

द्वितीयः—भोस्तात ! एष गच्छामि । ( निष्कान्तः । )

१२ वृद्धः—हा हा परिमुषिताः स्मो भोः ! परिमुषिताः स्मः ।

यस्त्रिशृंगो मम त्वासीन्मनोज्ञो वंशपर्वतः ।
स मध्यशृंगभङ्गेन मनस्तपति मे भृशम् ॥ २३ ॥

हा पुत्रक ! कथं गत एव ।

तरुण ! तरुणतानुरूपकान्ते !
नियमपराध्ययनप्रसक्तबुद्धे ! ।
कथमिव गजराजदन्तभग्न-
स्तरुरिव यास्यसि पुष्पितो विनाशम् ॥ २४ ॥

घटोत्कचः–चिरायते खलु ब्राह्मणबटुः । अतिक्रामति मातुराहार-
कालः । किं नु खलु करिष्ये । भवतु दृष्टम् । भो ब्राह्मण ! आहूयतां
३ तव पुत्रः ।
वृद्धः–आः अतिराक्षसं खलु ते वचनम् ।
घटोत्कचः–कथं रुष्यति । मर्षयतु भवान्मर्षयतु । अयं मे प्रकृति-
६ दोषः । अथ किंनामा तव पुत्रः ।
वृद्धः–एतदपि न शक्यं श्रोतुम् ।
घटोत्कचः–युक्तं भोः । ब्राह्मणकुमार ! किंनामा ते भ्राता ।
९ प्रथमः–तपस्वी मध्यमः ।
घटोत्कचः– मध्यम इति सदृशमस्य । अहमेवाह्वयामि । भो मध्यम !
मध्यम ! शीघ्रमागच्छ ।
१२ ( ततः प्रविशति भीमसेनः । )
भीमः–कस्यायं स्वरः ।

खगशतविरुते विरौति तारं
द्रुमगहने दृढसंकटे घनेऽस्मिन् ।
जनयति च मनोज्वरं स्वरोऽयं
बहुसदृशो हि धनंजयस्वरस्य[1] ॥ २५ ॥

घटोत्कचः–चिरायते खलु ब्राह्मणबटुः । अतिक्रामति मातुराहार-
कालः । किं नु खलु करिष्ये । भवतु दृष्टम् । उच्चैः शब्दापयामि ।
३ भो मध्यम ! शीघ्रमागच्छ ।

१. धनंजयस्य शब्दः ।

भीमः—भोः । को नु खल्वेतस्मिन्वनान्तरे मम व्यायामविघ्नमुत्पाद्य मध्यम इति मां शब्दापयति । भवतु पश्यामस्तावत् । (परिक्रम्या-
६ वलोक्य सविस्मयं) अहो दर्शनीयोऽयं पुरुषः । अयं हि,

सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीप्तविश्लिष्टकेशः ।
व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥ २६ ॥

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः । उच्चैः शब्दापयामि । भो भो मध्यम ! शीघ्रमागच्छ ।

३ भीमः—भोः ! प्राप्तोऽस्मि ।

घटोत्कचः—न खल्वयं ब्राह्मणवटुः । अहो दर्शनीयोऽयं पुरुषः । य एषः—

सिंहाकृतिः कनकतालसमानबाहुः
मध्ये तनुर्गरुडपक्षविलिप्तपक्षः ।
विष्णुर्भवेद्विकसिताम्बुजपत्रनेत्रो
नेत्रे ममाहरति बन्धुरिवागतोऽयम् ॥ २७ ॥

भो मध्यम ! त्वां खल्वहं शब्दापयामि ।

भीमः—अतः खल्वहं प्राप्तः ।

३ घटोत्कचः—किं भवानपि मध्यम ।

भीमः—न तावदपरः ।

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः ।
मध्यमोऽहं क्षितौ भद्र भ्रातॄणामपि मध्यमः ॥ २८ ॥

घटोत्कचः—भवितव्यम् ।

---

१. °दीर्घ० । २. चिक्किनद्धाः ।

भीमः–अपि च,

मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः ।
भ[1]ये च मध्यमो लोके सर्वकार्येषु मध्यमः ॥ २९ ॥

वृद्धः–

मध्यमस्त्विति संप्रोक्ते नूनं पाण्डवमध्यमः ।
अस्मान्मोक्तुमिहायातो दर्पान्मृत्योरिवोत्थितः ॥ ३० ॥

( प्रविश्य )

मध्यमः–

अस्यामाचम्य पद्मिन्यां परलोकेषु दुर्लभम् ।
आत्मनैवात्मनो दत्तं पद्मपत्रोज्ज्वलं जलम् ॥ ३१ ॥

( उपगम्य ) भोः पुरुष ! प्राप्तोऽस्मि ।

घटोत्कचः–भवानि[2] दानि खल्वसि मध्यमः । मध्यम ! इत इतः ।

वृद्धः–( भीमसेनमुपगम्य ) भो मध्यम ! परित्रायस्व ब्राह्मणकुलम् ।

भीमः–न भेतव्यम् न भेतव्यम् । मध्यमोऽहमभिवादये ।

वृद्धः–आयुरिव दीर्घायुर्भव ।

भीमः–अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ।

वृद्धः–श्रूयताम् । अहं खलु कुरुराजेन युधिष्ठिरेणाधिष्ठितपूर्वे कुरुजाङ्गले यूपग्रामवास्तव्यो माठरसगोत्रश्च कल्पशाखाध्वर्युः केशवदासो नाम ब्राह्मणः । तस्य ममोत्तरस्यां दिशि उद्यामकग्रामवासी मातुलः कौशिकसगोत्रो यज्ञबन्धुर्नामास्ति । तस्य पुत्रोपनयनार्थं सकलत्रोऽस्मि प्रस्थितः ।

भीमः–अरिष्टोऽस्तु पन्थाः । ततस्ततः ।

वृद्धः–ततो मामेष हि–

१. भवे । २. भवान् इदानीं खल्वसि ।

सजलजलदगात्रः पद्मपत्रायताक्षो
मृगपतिगतिलीलो राक्षसः प्रोग्रदंष्ट्रः ।
जगति विगतशङ्कस्त्वद्विधानां समक्षं
ससुतपरिजनं भो ! हन्तुकामोऽभ्युपैति ॥ ३२ ॥

भीमः–एवम् । अनेन ब्राह्मणजनस्य मार्गविघ्नः कृतः । भवतु निग्रहिष्यामि तावदेनम् । भोः पुरुष ! तिष्ठ तिष्ठ ।

३ घटोत्कच.–एष स्थितोऽस्मि ।

भीमः–किमर्थं ब्राह्मणजनमपराध्यसि[1] ।

पुत्रनक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च ।
वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवोत्थितः ॥ ३३ ॥

घटोत्कच.–अथ किम् । राहुरेव ।

भीमः-आः,

निवृत्तव्यवहारोऽयं सदारस्तनयैः सह ।
सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥ ३४ ॥

घटोत्कचः–न मुच्यते ।

भीमः–( आत्मगतम् ) भोः ! कस्य पुत्रेणानेन भवितव्यम् ।

भ्रातॄणां मम सर्वेषां कोऽयं भोः ! गुणतस्करः ।
दृष्ट्वैतद्बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम् ॥ ३५ ॥

( प्रकाशम् ) भोः पुरुष ! मुच्यताम् ।

घटोत्कचः–न मुच्यते ।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता ।
न मुच्यते तथा ह्येष गृहीतो मातुराज्ञया ॥ ३६ ॥

---

१. पर ( रा ) स्यसि ।

भीमः–( आत्मगतम् ) कथं मातुराज्ञेति । अहो गुरुशुश्रूषुः खल्वयं तपस्वी ।

माता किल मनुष्याणां दैवतानां च दैवतम् ।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः ॥ ३७ ॥

( प्रकाशम् ) भोः पुरुष ! प्रष्टव्यं खलु तावदस्ति ।

घटोत्कचः–ब्रूहि ब्रूहि, शीघ्रम् ।

३ भीमः–का नाम भवतो माता ।

घटोत्कचः–श्रूयतां, हिडिम्बा नाम राक्षसी,

कौरव्यकुलदीपेन पाण्डवेन महात्मना[1] ।
सनाथा या महाभागा पूर्णेन द्यौरिवेन्दुना ॥ ३८ ॥

भीमः–( संहर्षमात्मगतम् ) एवं हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य गर्वः ।

रूपं सत्त्वं बलं चैव पितृभिः सदृशं बहु ।
प्रजासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥ ३९ ॥

( प्रकाशम् ) भोः पुरुष ! मुच्यताम् ।

घटोत्कचः–न मुच्यते ।

३ भीमः–भो ब्राह्मण ! गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

द्वितीयः–मा मा भवानेवम् ।

त्यक्ताः प्रागेव मे प्राणाः गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले ॥ ४० ॥

भीमः–आर्य ! मा मैवम् । क्षत्रियकुलोत्पन्नोऽहम् । पूज्यतमाः खलु ब्राह्मणाः । तस्माच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

६ घटोत्कचः–एवं क्षत्रियोऽयं, तेनास्य दर्पः । भवतु, इममेव हत्वा नेष्यामि । अथ केनायं वारितः ।

---

१. °रिवात्मना ।

भीमः—मया ।

घटोत्कचः—किं त्वया ।

भीमः—अथ किम् ।

घटोत्कचः—तेन हि भवानेवागच्छतु ।

भीमः—एवमति[1]बलवीर्यान्नानुगच्छामि । यदि ते शक्तिरस्ति बलात्कारेण मां नय ।

घटोत्कचः—किं मां प्रत्यभिजानीते भवान् ।

भीमः—मत्पुत्र इति जाने ।

घटोत्कचः—कथं कथं तव पुत्रोऽहम् ।

भीमः—कथं रुष्यति । मर्षयतु भवान् । सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते । अत एवं मयाभिहितम् ।

घटोत्कचः—भीतानामायुधं गृहीतम् ।

भीमः—

शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे ।
किंरूपमेतद्वद भद्र तस्य गुणागुणज्ञः सदृशं प्रपत्स्ये ॥ ४१ ॥

घटोत्कचः—एष ते भयमुपदिशामि । गृह्यतामायुधम् ।

भीमः—आयुधमिति, गृहीतमेतत् ।

घटोत्कचः—कथमिव ।

भीमः—

काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।
अयं तु दक्षिणो बाहुरायुधं [2]सहजं मम ॥ ४२ ॥

घटोत्कचः—इदमुपपन्नं पितुर्मे भीमसेनस्य ।

भीमः—अथ कोऽयं भीमो नाम ।

---

१. अतिवीर्यमलं । २. सदृशं ।

विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः ।
एतेषु कथ्यतां भद्र केन ते सदृशः पिता ॥ ४३ ॥

घटोत्कचः–सर्वैः ।

भीमः–धिगनृतमेतत् ।

घटोत्कचः–कथं कथमनृतमित्याह । क्षिपसि मे गुरुम् । भवत्विमं स्थूलं वृक्षमुत्पाट्य प्रहरामि । ( उत्पाट्य प्रहरति । ) कथमनेनापि न शक्यते हन्तुम् । किं नु खलु करिष्ये । भवतु, दृष्टम् । एतद्गिरिकूटमुत्पाट्य प्रहरामि ।

शैलकूटं मयाक्षिप्तं प्राणानादाय यास्यति ।

भीमः–

रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं धर्षयेद्वने ॥ ४४ ॥

घटोत्कचः–( प्रहृत्य ) कथमनेनापि न शक्यते हन्तुम् । किं नु खलु करिष्ये । भवतु दृष्टम् ।

नन्वहं भीमसेनस्य पुत्रः पौत्रो नभस्वतः ।
तिष्ठेदानीं सुसन्नद्धो नियुद्धे नास्ति मत्समः ॥ ४५ ॥

( इत्युभौ नियुद्धं कुरुतः । )

घटोत्कचः–( भीमसेनं बद्ध्वा )

व्रजसि कथमिह त्वं वीर्यमुल्लङ्घ्य बाह्वो-
र्गज इव दृढपाशैः पीडितो मद्भुजाभ्याम् ।

भीमः–( आत्मगतम् ) कथं गृहीतोऽस्म्यनेन । भोः सुयोधन ! वर्धते ते शत्रुपक्षः । कृतरक्षो भव । ( प्रकाशम् ) भोः पुरुष ! अवहितो भव ।

घटोत्कचः–अवहितोऽस्मि ।

भीमः–( नियुद्धबन्धमवधूय )

व्यपनय बलदर्पं दृष्टसारोऽसि वीर !
न हि मम परिखेदो विद्यते बाहुयुद्धे ॥ ४६ ॥

घटोत्कच.–कथमनेनापि न शक्यते हन्तुम् । किं नु खलु करिष्ये । भवतु, दृष्टम् । अस्ति मातृप्रसादलब्धो मायापाशः । तेन बध्वैनं नेष्यामि । कुतः खल्वाप. । भो गिरे ! आपस्तावत् । हन्त स्रवति । ( आचम्य मन्त्रं जपति । ) भोः पुरुष !

मायापाशेन बद्धस्त्वं विवशोऽनु[1]गमिष्यसि ।
राजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे ॥ ४७ ॥

( इति मायया बध्नाति । )

भीमः– कथं मायापाशेन बद्धोऽस्मि । किमिदानीं करिष्ये । भवतु दृष्टम् । *अस्ति मे महेश्वरप्रसादाल्लब्धो मायापाशमोक्षो मन्त्रः ।* तं जपामि । कुत. खल्वापः । भो ब्राह्मणकुमार ! आनय कमण्डलुगता आपः ।

वृद्धः–इमा आप· ।

( भीम आदायाचम्य मन्त्रं जप्त्वा मायामपनयति । )

घटोत्कच –अये पतितः पाश. । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो. पुरुष ! पूर्वसमयं स्मर ।

भीमः–समयमिति । एष स्मरामि । गच्छामतः । ( उभौ परिक्रामतः । )

वृद्ध.–पुत्रकाः किं कुर्मः । अयं गच्छति वृकोदरः ।

आक्रम्य राक्षसमिमं ज्वलदुग्ररूप-
मुग्रेण बाहुबलवीर्यगुणेन युक्तम् ।
एष प्रयाति शनकैरवधूय शीघ्र-
मासारवर्षमिव गोवृषभस्सलीलम् ॥ ४८ ॥

१. न गमिष्यसि ।

घटोत्कचः—इह तिष्ठ । त्वदागमनमम्बायै निवेदयामि ।

भीमः—बाढम् । गच्छ ।

घटोत्कचः—( उपसृत्य ) अम्ब ! अयमभिवादये । चिराभिलषितो भवत्या आहारार्थमानीतो मानुषः ।

( प्रविश्य )

हिडिम्बा—जाद ! चिरं जीव । [ जात ! चिरं जीव । ]

घटोत्कचः—अनुगृहितोऽस्मि ।

हिडिम्बा—जाद ! कीदिसो माणुसो आणीदो । [ जात, कीदृशो मानुष आनीतः । ]

घटोत्कचः—भवति रूपमात्रेण मानुषः । न वीर्येण ।

हिडिम्बा—किं बह्मणो । [ किं ब्राह्मणः । ]

घटोत्कचः—न ब्राह्मणः ।

हिडिम्बा—आदु थेरो । [ अथवा स्थविरः । ]

घटोत्कचः—न वृद्धः ।

हिडिम्बा—किं बाळो । [ किं बालः । ]

घटोत्कचः—न बालः ।

हिडिम्बा—जइ एव्वं, पेक्खामि दाव णं । ( उभौ परिक्रामतः । ) [ यद्येवं पश्यामि तावदेनम् । ]

हिडिम्बा— किं एसो माणुसो आणीदो । [ किमेष मानुष आनीतः । ]

घटोत्कचः—अम्ब ! कोऽयम् ।

हिडिम्बा—उम्मत्तअ दव्वदं खु अम्हाअं । [ उन्मत्तक दैवतं खल्वस्माकम् ।

घटोत्कचः—आः कस्य दैवतम् ।

हिडिम्बा— तव अ, मम अ । [ तव च, मम च । ]

घटोत्कचः—कः प्रत्ययः ।

हिडिम्बा–अअं पच्चओ । जेदु अय्यउत्तो । [ अयं प्रत्ययः ! 
२७ जयत्वार्यपुत्रः । ]

भीमः–( विलोक्य ) का पुनरियम् । अये देवी हिडिम्बा ।

अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने ।
जातकारुण्यया देवि ! संतापो नाशितस्त्वया ॥ ४९ ॥

हिडिम्बे ! किमिदम् ।

हिडिम्बा–( कर्णे ) अय्यउत्त ! ईदिसं विअ । [ आर्यपुत्र ! ईदृशमिव । ]

३ भीमः–जात्या राक्षसी, न समुदाचारेण ।

हिडिम्बा–उम्मत्तअ ! अभिवादेहि पिदरं । [ उन्मत्तक ! अभिवादय पितरम् । ]

६ घटोत्कचः–भोस्तात !

[1]अज्ञानात्तु मया पूर्वं यद्भवान्नाभिवादितः ।
अस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥ ५० ॥

अहं स धार्तराष्ट्रवनदवाग्निर्घटोत्कचोऽभिवादये । पुत्रचापलं क्षन्तुमर्हसि ।

३ भीमः–एह्येहि पुत्र व्यतिक्रमकृतं क्षान्तमेव[2] । ( इति परिष्वज्य ) अयं स धार्तराष्ट्रवनदवाग्निः । पुत्रापेक्षीणि खलु पितृहृदयानि । पुत्र, अतिबलपराक्रमो भव ।

६ घटोत्कचः–अनुगृहीतोऽस्मि ।

वृद्धः–एवं भीमसेनपुत्रोऽयं घटोत्कचः ।

भीमः–पुत्र ! अभिवादयात्रभवन्तं केशवदासम् ।

९ घटोत्कचः–भगवन्नभिवादये ।

---

१. अयं श्लोकः मुद्रितपुस्तकेषु न दृश्यते । २. क्षान्तमेव । ३. धार्तराष्ट्रवनदवाग्निपुत्रापेक्षिणि ।

वृद्धः–पितृसदृशगुणाकीर्तिर्भव ।

घटोत्कचः–अनुगृहीतोऽस्मि ।

१२ वृद्धः–भो वृकोदर ! रक्षितमस्मत्कुलं, स्वकुलमुद्धृतं च । गच्छामस्तावत् ।

भीमः–

अनुग्रहात्तु भवतः सर्वमासीदिदं शुभम् ।
आश्रमोऽदूरतोऽस्माकं तत्र विश्रम्य गम्यताम् ॥ ५१ ॥

वृद्धः–कृतमातिथ्यमनेन जीवितप्रदानेन । तस्माद्गच्छामस्तावत् ।

भीमः–गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय ।

३ वृद्धः–बाढम् । प्रथमः कल्पः । ( सपुत्रत्रयकलत्रो निष्क्रान्तः केशवदासः । )

*भीमः–हिडिम्बे ! इतस्तावत् । वत्स घटोत्कच ! इतस्तावत् ।* तत्रभवन्तं केशवदासं आश्रमपदद्वारमात्रमपि संभावयिष्यामः ।

यथा नदीनां प्रभवः समुद्रो
यथाहुतीनां प्रभवो हुताशनः ।
यथेन्द्रियाणां प्रभवं मनोऽपि
तथा प्रभुर्नो भगवानुपेन्द्रः ॥ ५२ ॥

( निष्क्रान्ताः सर्वे । )

॥ मध्यमव्यायोगं नाम नाटकं समाप्तम् ॥

---

## दूतवाक्यस्य कथावस्तु ।

सर्वक्षत्रियकुलसंक्षयकारकस्य कुरुपाण्डवयुद्धस्य प्राक् श्रीकृष्णेन पाण्डवार्थे दुर्योधनसभायां कृतं दौत्यमस्य नाटकस्य कथावस्तु ।

## पात्राणि ।

काञ्चुकीयः–दुर्योधनस्य भृत्यो बादरायणः ।

दुर्योधनः–कौरवप्रमुखः ।

वासुदेवः–पाण्डवदूतः श्रीकृष्णः ।

सुदर्शनः–श्रीकृष्णस्यायुधवरम् ।

धृतराष्ट्रः–दुर्योधनस्य पिता ।



॥ श्रीः ॥

भासनाटकचक्रे

# दूतवाक्यम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः–

पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

३ ( नेपथ्ये )

भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समाज्ञापयति ।

सूत्रधारः– भवतु, विज्ञातम् ।

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
५ मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया ॥ २ ॥

( निष्क्रान्तः । )

स्थापना ।

---

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः–भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समा-
३ ज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि । तदा-
हूयन्तां सर्वे राजान इति । ( परिक्रम्यावलोक्य ) अये अयं महाराजो
दुर्योधन इत एवाभिवर्तते । य एषः,

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः ।
श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो
नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥ ३ ॥

( ततः प्रविशति यथानिर्दिष्टो दुर्योधनः ।)

दुर्योधनः—उद्धूतरोपमिव मे हृदयं सहर्ष
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना-
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥ ४ ॥

काञ्चुकीयः—जयतु महाराजः । महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

दुर्योधनः—सम्यक् कृतम् । प्रविश त्वमवरोधनम् ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

दुर्योधनः—आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हति । किं किमाहतुर्भवन्तौ—महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति । सदृशमेतत् । तदागम्यतां मन्त्रशालामेव प्रविशामः । आचार्य अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । मातुल ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरं प्रविशन्तु भवन्तः । वयस्य ! कर्ण ! प्रविशामस्तावत् ।

( प्रविश्य )

आचार्य ! एतत् कूर्मासनम्, आस्यताम् । पितामह ! एतत् सिंहासनम्, आस्यताम् । मातुल ! एतच्चर्मासनम्, आस्यताम् । आर्यौ

वैकर्णवर्षदेवौ ! आसातां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरमासतां भवन्तः । किमिति किमिति महाराजो नास्त इति । अहो सेवाधर्मः । नन्वयमहमासे । वयस्य कर्ण ! त्वमप्यास्स्व । ( उपविश्य ) आर्यौ वैकर्णवर्षदेवौ ! उच्यताम्-अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य क सेनापतिर्भवितुमर्हतीति । किमाहतुर्भवन्तौ-अत्रभवान् गान्धारराजो वक्ष्यतीति । भवतु, मातुलेनाभिधीयताम् । किमाह मातुलः-अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हतीति । सम्यगाह मातुलः । भवतु भवतु, पितामह एव भवतु । वयमप्येतदभिलपामः ।

सेनानिनादपटहस्वनशङ्खनादै-
श्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

( प्रविश्य )

काञ्चुकीयः-जयतु महाराजः । एष खलु पाण्डवस्कन्धावाराद् दौत्येनागतः पुरुषोत्तमो नारायणः ।

दुर्योधनः- मा तावद् भो बादरायण ! । किं किं कंसभृत्यो दामोदरस्तव पुरुषोत्तमः । स गोपालकस्तव पुरुषोत्तमः । बार्हद्रथापहृतविषयकीर्तिर्भोगस्तव पुरुषोत्तमः । अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचारः । सगर्वं खल्वस्य वचनम् । आः अपध्वंस ।

काञ्चुकीयः-प्रसीदतु महाराजः । संभ्रमेण समुदाचारो विस्मृतः । ( पादयोः पतति । )

दुर्योधनः-संभ्रम इति । आ मनुष्याणामस्त्येव संभ्रमः । उत्तिष्ठोत्तिष्ठ ।

काञ्चुकीयः-अनुगृहीतोऽस्मि ।

दुर्योधनः-इदानीं प्रसन्नोऽस्मि । क एष दूतः प्राप्तः ।

काञ्चुकीयः—दूतः प्राप्तः केशवः ।

दुर्योधनः—केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः । भो भो राजानः ! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः—अर्घ्यप्रदानेन पूजयितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

ग्रहणमुपगते तु वासुभद्रे
हृतनयना इव पाण्डवा भवेयुः ।
गतिमतिरहितेषु पाण्डवेषु
क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

अपि च योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवतु भवन्तः । को नु खलु ममाप्रत्युत्थानस्योपायः । हन्त दृष्ट उपायः । बादरायण ! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । (अपवार्य) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । अयं स चित्रपटः ।

दुर्योधनः—ममाग्रतः प्रसारय ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । (प्रसारयति ।)

दुर्योधनः—अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी,

दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना ।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥ ७ ॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति । एष युधिष्ठिरः,

९ धृतराष्ट्रः– गच्छ, पितुरङ्के विश्रमस्व।
दुर्जयः– ताद ! अहं गच्छामि। (उपसृत्य) ताद ! कहिं सि। [ तात ! अहं गच्छामि। तात क्वासि। ]
१२ राजा– अयमप्यागतः। भोः ! सर्वावस्थायां हृदयसंनिहितः पुत्रस्नेहो मां दहति। कुतः,

> दुःखानामनभिज्ञो यो ममाङ्कशयनोचितः।
> निर्जितं दुर्जयो दृष्ट्वा किन्नु मामभिवास्यति॥ ४२॥

दुर्जयः– अअं महाराओ भूमीए उवविट्ठो। [ अयं महाराजो भूम्यामुपविष्टः। ]
३ राजा– पुत्र किमर्थमिहागतः।
दुर्जयः– तुवं चिरायसि त्ति। [ त्वं चिरायसीति। ]
राजा– अहो अस्यामवस्थायामपि पुत्रस्नेहो हृदयं दहति।
६ दुर्जयः– अहं पि खु दे अङ्के उवविसामि। ( अङ्कमारोहति ) [ अहमपि खलु ते अङ्के उपविशामि। ]
राजा– ( निवार्य ) दुर्जय ! दुर्जय ! भोः ! कष्टम्।

> हृदयप्रीतिजननो यो मे नेत्रोत्सवः स्वयम्।
> सोऽयं कालविपर्यासाच्चन्द्रो वह्नित्वमागतः॥ ४३॥

दुर्जयः–अङ्के उववेसं किण्णिमित्तं तुवं वारेसि। [ अङ्क उपवेशं किंनिमित्तं त्वं वारयसि। ]
३ राजा–

> त्यक्त्वा परिचितं पुत्र ! यत्र तत्र त्वयास्यताम्।
> अद्यप्रभृति नास्तीदं पूर्वभुक्तं तवासनम्॥ ४४॥

दुर्जयः– कहिं णु हु महाराओ गमिस्सिदि। [ कुत्र नु खलु महाराजो गमिष्यति। ]

राजा– भ्रातृशतमनुगच्छामि ।

दुर्जयः– मं पि तहि णेहि । [ मामपि तत्र नय । ]

राजा– गच्छ पुत्र ! एवं वृकोदरं ब्रूहि ।

दुर्जयः– एहि महाराअ ! अण्णेसीअसि । [ एहि महाराज ! अन्विष्यसे । ]

राजा– पुत्र केन ।

दुर्जयः– अय्याए अय्येण सव्वेण अन्तेउरेण अ । [ आर्ययार्येण सर्वेणान्तःपुरेण च । ]

राजा– गच्छ पुत्र ! नाहमागन्तुं समर्थः ।

दुर्जयः– अहं तुमं णइस्सं । [ अहं त्वां नेष्यामि । ]

राजा– बालस्तावदसि पुत्र ।

दुर्जयः– ( परिक्रम्य ) अय्या ! अअं महाराओ । [ आर्याः ! अयं महाराजः । ]

देव्यौ– हा हा ! महाराओ । [ हा हा ! महाराजः । ]

धृतराष्ट्रः– कासौ महाराजः ।

गान्धारी– कहिं मे पुत्तओ । [ कुत्र मे पुत्रकः । ]

दुर्जयः– अअं महाराओ भूमीए उवविट्ठो [ अयं महाराजो भूम्यामुपविष्टः । ]

धृतराष्ट्रः– हन्त भोः ! किमयं महाराजः ।

य: काञ्चनस्तम्भसमप्रमाणो लोके किलैको वसुधाधिपेन्द्रः ।
कृतः स मे भूमिगतस्तपस्वी द्वारेन्द्रकीलार्धसमप्रमाणः ॥४५॥

गान्धारी– जाद सुयोधण ! परिस्संतोसि । [ जात सुयोधन ! परिश्रान्तोऽसि । ]

राजा– भवत्याः खल्वहं पुत्रः ।

धृतराष्ट्रः– केयं भोः ! ।

गान्धारी–महाराज । अहममीदपुत्तप्पसविणी । [ महाराज ! अहममीतपुत्रप्रसविनी । ]

राजा–अद्योत्पन्नमिवात्मानमवगच्छामि । भोस्तात किमिदानीं वैक्लव्येन ।

धृतराष्ट्र–पुत्र कथमविक्लवो[1] भविष्यामि ।

यस्य वीर्यबलोत्सिक्त सयुगाध्वरदीक्षितम् ।
पूर्वं भ्रातृशत नष्ट त्वय्येकस्मिन्हते हतम् ॥ ४६ ॥

( पतति । )

राजा–हा धिक् । पतितोऽत्रभवान् । तात ! समाश्वासयात्रभवतीम् ।

धृतराष्ट्र–पुत्र ! किमिति समाश्वासयामि ।

राजा–अपराङ्मुखो युधि हत इति । भोस्तात ! शोकनिग्रहेण क्रियता ममानुग्रह ।

त्वत्पादमात्रप्रणतामौलिर्ज्वलन्तमप्यग्निमचिन्तयित्वा ।
येनैव मानेन सम प्रसूतस्तेनैव मानेन दिव प्रयामि ॥ ४७ ॥

धृतराष्ट्र –

वृद्धस्य मे जीवितनि स्पृहस्य निसर्गसमीलितलोचनस्य ।
धृतिं निगृह्यात्मनि सप्रवृत्तस्तीव्रस्समाक्रामति पुत्रशोक ॥ ४८ ॥

बलदेव –भो ! कष्टम् ।

दुर्योधननिराशस्य नित्यास्तमितचक्षुष ।
न शक्नोम्यत्रभवत कर्तुमात्मनिवेदनम् ॥ ४९ ॥

राजा–विज्ञापयाम्यत्रभवतीम् ।

गान्धारी–भणाहि जाद ! । [ भण जात ! ]

---

१ कथ विक्लवो ।

राजा–नमस्कृत्य वदामि त्वां यदि पुण्यं मया कृतम् ।
अन्यस्यामपि जात्यां मे त्वमेव जननी भव ॥ ५० ॥

गान्धारी–मम मणोरहो खु तुए भणिदो । [ मम मनोरथः खलु त्वया भणितः । ]

३ राजा–मालवि ! त्वमपि शृणु ।

भिन्ना मे भ्रुकुटी गदानिपतितैर्व्यायुद्धकालोत्थितै–
र्वक्षस्युत्पतितैः प्रहाररुधिरैर्हारावकाशो हृतः ।
पश्येमौ व्रणकाञ्चनाङ्गदधरौ पर्याप्तशोभौ भुजौ
भर्ता ते नपराङ्मुखो युधि हतः किं क्षत्रिये रोदिषि ॥५१॥

देवी–बाला एसा सहधर्मचारिणी रोदामि । [ बाला एषा सहधर्मचारिणी रोदिमि । ]

३ राजा–पौरवि ! त्वमपि शृणु ।

वेदोक्तैर्विविधैर्मखैरमिमतैरिष्टं धृता बान्धवाः
शत्रूणामुपरि स्थितं प्रियशतं न व्यंसिताः संश्रिताः ।
युद्धेऽष्टादशवाहिनीनृपतयः संतापिता निग्रहे
मानं मानिनि ! वीक्ष्य मे न हि रुदन्त्येवंविधानां स्त्रियः ॥५२॥

पौरवी–एक्ककिदप्पवेसणिच्चआ ण रोदामि । [ एककृतप्रवेशनिश्चया न रोदिमि । ]

३ राजा–दुर्जय ! त्वमपि शृणु ।
धृतराष्ट्रः–गान्धारि ! किं नु खलु वक्ष्यति ।
गान्धारी–अहं पि तं एव्व चिन्तेमि । [ अहमपि तदेव चिन्तयामि । ]

६ राजा–अहमिव पाण्डवाः शुश्रूषयितव्याः, तत्रभवत्याश्चाम्बायाः कुन्त्या निदेशो वर्तयितव्यः । अभिमन्योर्जननी द्रौपदी चोभे मातृवत्पूजयितव्ये । पश्य पुत्र !

इह तु विजयभूमौ द्रष्टुमभ्योद्यतास्त्रः
सरभसमहमेको द्रोणपुत्रः स्थितोऽस्मि ॥ ५७ ॥

किमनया ममाप्यप्रतिलाभविजयश्लाघया समरश्रिया । ( परिक्रम्य ) मा तावत् । मयि गुरुनिधनव्यग्रे वञ्चितः किल कुरुकुलतिलकभूतः कुरुराजः । क एतच्छ्रद्धास्यति । कुतः,

उद्यत्प्राञ्जलयो रथद्विपगताश्चापद्वितीयैः करै-
र्यस्यैकादशवाहिनीनृपतयस्तिष्ठन्ति वाक्योन्मुखाः ।
भीष्मो रामशरावलीढकवचस्तातश्च योद्धा रणे
व्यक्तं निर्जित एव सोऽप्यविरथः कालेन दुर्योधनः ॥५८॥

तत् क्व नु खलु गतो गान्धारीपुत्रः । ( परिक्रम्यावलोक्य ) अये [१]अयमिहवगजतुरगनररथप्राकारमध्यगतः समरपयोधिपारगः कुरुराजः । य एषः,

मौलीनिपातचलकेशमयूखजालै-
र्गात्रैर्गदानिपतनक्षतशोणितार्द्रैः ।
भात्यस्तमस्तकशिलातलसंनिविष्टः
सन्ध्यावगाढ इव पश्चिमकालसूर्यः ॥ ५९ ॥

( उपसृत्य ) भोः कुरुराज ! किमिदम् ।

राजा–गुरुपुत्र ! फलमपरितोषस्य ।

अश्वत्थामा–भोः कुरुराज ! सत्कारमूल्यमावर्जयिष्यामि ।

राजा–किं भवान् करिष्यति ।

अश्वत्थामा–श्रूयताम् ।

युद्धोद्यतं गरुडपृष्ठनिविष्टदेह-
मष्टार्धभीमभुजमुद्यतशार्ङ्गचक्रम् ।

१. यात्य । २. "देहं स्पष्टा"

कृष्णं सपाण्डुतनयं युधि शस्त्रजालैः
संकीर्णलेख्यमिव चित्रपटं क्षिपामि ॥ ६० ॥

राजा–मा मा भवानेवम्।

गतं धात्र्युत्संगे सकलममिपिक्तं नृपकुलं
गतः कर्णः स्वर्गं निपतिततनुः शन्तनुसुतः।
गतं भ्रातृणां मे शतमभिमुखं सयुगमुखे
वयं चैवंभूताः गुरुसुत ! धनुर्मुञ्चतु भवान् ॥ ६१ ॥

अश्वत्थामा–भोः कुरुराज।

संयुगे पाण्डुपुत्रेण गदापातकचग्रहे।
सममूरुद्वयेनाद्य दर्पोऽपि भवतो हृतः ॥ ६२ ॥

राजा–मा मैवम्। मानशरीरा राजानः। मानार्थमेव मया निग्रहो गृहीतः। पश्य गुरुपुत्र।

यत्कृष्टा करनिग्रहाञ्चितकचा द्यूते तदा द्रौपदी
यद्बालोऽपि हतस्तदा रणमुखे पुत्रोऽभिमन्युः पुनः।
अक्षव्याजजिता वनं वनमृगैर्यत्पाण्डवाः संश्रिता
नन्वल्पं मयि तैः कृतं विमृश भो ! दर्पार्हमेवं दीक्षितैः ॥ ६३ ॥

अश्वत्थामा–सर्वथा कृतप्रतिज्ञोऽस्मि।

भवता चात्मना चैव वीरलोके. शपाम्यहम्।
निशासमरमुत्पाद्य रणे धक्ष्यामि पाण्डवान् ॥ ६४ ॥

बलदेव.–एतद्भविष्यत्युदाहृतं गुरुपुत्रेण।

अश्वत्थामा–हलायुधोऽत्रभवान्।

२ धृतराष्ट्रः–हन्त ! साक्षिमती खलु वञ्चना।

अश्वत्थामा–दुर्जय ! इतस्तावत्।

१. दर्पनतं।

पितृविक्रमदायाद्ये राज्ये भुजबलार्जिते ।
विनाभिषेकं राजा त्वं विप्रोक्तैर्वचनैर्भव ॥ ६५ ॥

राजा–हन्त ! कृतं मे हृदयानुज्ञातम् । परित्यजन्तीव मे प्राणाः । इमेऽत्रभवन्तः शन्तनुप्रभृतयो मे पितृपितामहाः । एतत्कर्णमग्रतः कृत्वा समुत्थितं भ्रातृशतम् । अयमप्यैरावतशिरोविपक्तः काकपक्षधरो महेन्द्रकरतलमवलम्ब्य क्रुद्धोऽभिभाषते मामभिमन्युः । उर्वश्याद्योऽप्सरसो मामभिगताः । इमे महार्णवा मूर्तिमन्तः । एता गंगाप्रभृतयो महानद्यः । एष सहस्रहंसप्रयुक्तो मां नेतुं वीरवाही विमानः कालेन प्रेषितः । अयमयमागच्छामि । ( स्वर्गं गतः । )

( यवनिकास्तरणं करोति । )

धृतराष्ट्रः–

यास्येष सज्जनधनानि तपोवनानि
पुत्रप्रणाशविफलं हि धिगस्तु राज्यम् ।

अश्वत्थामा–

यातोऽद्य सौप्तिकवधोद्यतबाणपाणिः

( भरतवाक्यम् )

बलदेवः–गां पातु नो नरपतिः शमितारिपक्षः ॥ ६६ ॥

( निष्क्रान्ताः सर्वे । )

ऊरुभङ्गं नाम नाटकं समाप्तम् ॥

---

# श्लोकानुक्रमणिका ।

## बालचरितस्य कथावस्तु ।

बालचरिते बालस्य श्रीकृष्णस्य जन्मदिनादारभ्य कंसहननान्तं सर्वं चरितं प्रतिपाद्यं वस्तु ।

## पात्राणि ।

**पुरुषाः—**

नारदः—देवर्षिः ।

वसुदेवः—कृष्णस्य जनकः ।

नन्दगोपः—वसुदेवस्य मित्रं गोकुलाध्यक्षः ।

उग्रसेनः—कंसस्य पिता ।

दामोदरः<br>सङ्कर्षणः } — भगवन्तौ वसुदेवसुतौ ।

गरुडः—विष्णोर्वाहनम् ।

चक्रः<br>शार्ङ्गः<br>शङ्खः<br>नन्दकः } — भगवत आयुधवराणि ।

राजा—मथुराधीशः कंसः ।

चाणूरः<br>मुष्टिकः } — मल्लविशेषौ कंससम्बन्धिनौ ।

भटः— कंसस्य भृत्यो ध्रुवसेननामा ।

काञ्चुकीयः—कंसस्य भृत्यो बालाकिनामा ।

शापः—शापाधिदेवता ।

सर्वे—रक्षिपुरुषाः ।

कुण्डोदरः
शूलः
नीलः
मनोजवः } —— कार्त्यायन्या भृत्याः ।

वृद्धगोपालकः—कश्चिद् गोपालकः ।

दामकः—कश्चिद् गोपालकः ।

अरिष्टर्षभः—असुरविशेषः ।

कालियः—यमुनाह्रदनिवासी महानागः ।

स्त्रियः—

देवकी—कृष्णस्य जननी ।

प्रतिहारी—देवक्या द्वारपालिका ।

धात्री—मायादारिकाया उपमाता ।

सर्वाः—चण्डालयुवतयः ।

कार्त्यायनी—कंसहस्तादुत्प्लुत्याकाशस्थिता देवी ।

सर्वाः—गोप्यो घोषसुन्दर्यादयः ।

राजश्रीः—राज्याधिदेवता ।

प्रतिहारी—कंसस्य द्वारपालिका मधुकरिका ।

प्रतिहारी—कंसस्य द्वारपालिका यशोधरा ।

कौमोदकी—भगवत आयुधवरम् ।

---

॥ श्रीः ॥

भासनाटकचक्रे

# बालचरितम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः—

शङ्खक्षीरवपुः पुरा कृतयुगे नाम्ना तु नारायण-
स्त्रेतायां त्रिपदार्पितत्रिभुवनो विष्णुः सुवर्णप्रभः ।
दूर्वाश्यामनिभः स रावणवधे रामो युगे द्वापरे
नित्यं योऽञ्जनसन्निभः कलियुगे वः पातु दामोदरः ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्तु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

२ ( नेपथ्ये )

अहं गगनसञ्चारी ।

सूत्रधारः—भवतु, विज्ञातम् ।

पतत्यसौ पुष्पमयी च वृष्टिर्नदन्ति तूर्याणि च देवतानाम् ।
द्रष्टुं हरिं वृष्णिकुले प्रसूतमभ्यागतो नारद एष तूर्णम् ॥ २ ॥

( निष्क्रान्तः । )

## स्थापना

( ततः प्रविशति नारदः । )

३ नारदः—

अहं गगनसञ्चारी त्रिषु लोकेषु विश्रुतः ।
ब्रह्मलोकादिह प्राप्तो नारदः कलहप्रियः ॥ ३ ॥

भोः !

क्षीणेषु देवासुरविमर्देषु नित्यप्रशान्ते न रमेऽन्तरिक्षे ।
अहं हि वेदाध्ययनान्तरेषु तन्त्रीश्च वैराणि च घट्टयामि ॥४॥

अपि च,

भक्तिः परा मम पितामहभाषितेषु
सर्वाणि मे बहुमतानि तपोवनानि ।
सत्यं ब्रवीमि करजाग्रहता च वीणा
वैराणि भीमकठिनाः कलहाः प्रिया मे ॥ ५ ॥

तद् भगवन्तं लोकादिमनिधनमव्ययं लोकहितार्थं कंसवधार्थं
वृष्णिकुले प्रसूतं नारायणं द्रष्टुमिहागतोऽस्मि । अये, इयमत्र-
३ भवती देवकी । मायया शिशुत्वमुपागतं त्रिलोकेश्वरं प्रगृह्य वसु-
देवेन सह शनैः स्वगृहान्निष्क्रामति । यैषा,

लोकानामभयकरं गुरुं सुराणां
दैत्यानां निधनकरं रथाङ्गपाणिम् ।
शोकार्ता शशिवदना निशि प्रशान्ता
बाहुभ्यां गिरिमिव मन्दरं वहन्ती ॥ ६ ॥

एष एष भगवान् नारायणः,

अनन्तवीर्यः कमलायताक्षः सुरेन्द्रनाथोऽसुरवीर्यहन्ता ।
त्रिलोककेतुर्जगतश्च[1] कर्ता भर्ता जनानां पुरुषः पुराणः ॥ ७ ॥

हन्तेवदुत्पन्नं कलहस्य मूलम् । यावदहमपि भगवन्तं नारायणं
प्रदक्षिणीकृत्य ब्रह्मलोकमेव यास्यामि । नमो भगवते त्रैलोक्य-
१ कारणाय ।

१. जगतां च कर्ता ।

नारायणाय नरलोकपरायणाय
लोकाननाय कमलामललोचनाय ।
रामाय रावणविरोचनपातनाय
वीराय वीर्यनिलयाय नमो वराय ॥ ८ ॥

( निष्क्रान्त । )

( ततः प्रविशति बालहस्ता देवकी । )

देवकी–हद्धि, पुत्तअस्स मे महाणुभावत्तणं सूअइस्सन्दाणि जम्मसमअसमुब्भूदाणि महाणिमित्ताणि पच्चक्खीकरअन्ती अवि कंसहदअणिसंसत्तणं चिन्तअन्ती सुट्ठु ण पच्चआमि मन्दभाइणी । कहिं णु गदो अय्यउत्तो । ( परिक्रम्य अग्रतो विलोक्य ) अम्मो, एसो अय्यउत्तो हरिसविम्हअफुल्लणअणो इदो एव्व आअच्छदि । [ हा धिक्, पुत्रकस्य मे महानुभावत्वं सूचयिष्यन्ति जन्मसमयसमुद्भूतानि महानिमित्तानि प्रत्यक्षीकुर्वत्यपि कंसहतकनृशंसत्वं चिन्तयन्ती सुष्ठु न प्रत्येमि मन्दभागिनी । क्व नु गत आर्यपुत्रः । अम्मो, एष आर्यपुत्रो हर्षविस्मयफुल्लनयन इत एवागच्छति । ]

( ततः प्रविशति वसुदेवः । )

वसुदेवः– ( सविमर्शम् ) भोः । किं नु खल्विदम् ।
भ्रमति नभसि विद्युच्चण्डवातानुविद्धै-
र्नवजलदनिनादैर्मेदिनी सप्रकम्पा ।
इह तु जगति नूनं रक्षणार्थं प्रजाना-
मसुरसमितिहन्ता विष्णुरद्यावतीर्णः ॥ ९ ॥

( विलोक्य ) एषा देवकी,

१. ध्वंसि ।

अगणितपरिखेदा याति षण्णां सुताना-
मपचयगमनार्थं सप्तमं रक्षमाणा ।
बहुगुणकृतलोभा जन्मकाले निमित्तैः
सुत इति कृतसंज्ञं कंसमृत्युं वहन्ती ॥ १० ॥

देवकी– ( उपसृत्य ) जेदु अय्यउत्तो । [ जयत्वार्यपुत्रः । ]

वसुदेवः–देवकि ! अर्धरात्रः खलु वर्तते । प्रसुप्तो मथुरायां सर्वो
३ जनः । तस्माद् यावन्न कश्चित् पश्यति, तावद् बालं गृहीत्वा-
पक्रामामि ।

देवकी–कहिं अय्यउत्तो इमं णइस्सदि । [ क्वार्यपुत्र इमं नेष्यति । ]

६ वसुदेवः–देवकि ! सत्यं ब्रवीषि । अहमपि न जाने । किन्तु,
एकच्छत्रच्छायां पृथिवीं समाज्ञापयति दुरात्मा कंसः । तत् क नु
खल्वयमायुष्मान् नेतव्यो भविष्यति । अथवा यत्र दैवं विधा-
९ स्यति, तत्र बालं गृहीत्वापक्रामामि ।

देवकी–अय्यउत्त ! इच्छामि दाव णं सुदिट्ठं कत्तुं । [ आर्यपुत्र !
इच्छामि तावदेनं सुदृष्टं कर्तुम् । ]

१२ वसुदेवः–अयि अतिपुत्रवत्सले !

किं द्रष्टव्यः शशाङ्कोऽयं राहोर्वदनमण्डले ।
त्वयाप्यस्य सुदृष्टस्य कंसो मृत्युर्भविष्यति ॥ ११ ॥

देवकी–सव्वहा ण भविस्सदि । [ सर्वथा न भविष्यति । ]

वसुदेवः–यद् भवत्याभिहितं, तत् सर्वदैवतैरभिहितं भवतु ।
३ आनय ।

देवकी–गह्णदु अय्यउत्तो । [ गृह्णात्वार्यपुत्रः । ]

वसुदेवः–( गृहीत्वा ) अहो गुरुत्वं बालस्य । साधु,

---

१. अर्धरात्रं ।

विन्ध्यमन्दरसारोऽयं बालः पद्मदलेक्षणः ।
गर्भे यया धृतः श्रीमानहो धैर्यं हि योषितः ॥ १२ ॥

देवकि ! प्रविश त्वमभ्यन्तरम् ।

देवकी–एसा गच्छामि मन्दभाआ । ( निष्क्रान्ता । ) [ एषा गच्छामि
३ मन्दभागा । ]

वसुदेवः–एषा देवकी,

हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥ १३ ॥

हन्त प्रविष्टा देवकी । यावदहमपि नगरद्वारं संश्रयामि । एष भोः,
प्रथमसुतविनाशजातमन्युर्नृपतिभयाकुलितः प्रगृह्य बालम् ।
त्वरिततरमिह प्रयामि मार्गे गिरिमिव मन्दरमुद्वहन्भुजाभ्याम् ॥ १४ ॥
( परिक्रम्य ) इदं नगरद्वारम् । यावत् प्रविशामि । ( प्रविश्य ) अये
प्रसुप्तो मथुरायां सर्वो जनः । यावदपक्रामामि । ( परिक्रम्य )
३ निष्क्रान्तोऽस्मि मथुरायाः । अहो बलवांश्चायमन्धकारः । सम्प्रति
हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १५ ॥

अहो तमसः प्रभुत्वम् ।

अप्रकाशा इव दिशो घनीभूता इव द्रुमाः ।
सुनिविष्टस्य लोकस्य कृतो रूपविपर्ययः ॥ १६ ॥

नाहं गन्तुं समर्थः । अये दीपिकालोकः । किन्तु खलु दुरात्मा कंसो
ममापक्रमणं ज्ञात्वा दीपिकाभिः परिवृतो मां ग्रहीतुमागतो भवेत् ।
३ भयत्वहमस्य दर्पप्रशमनं करोमि । ( खड्गमुत्कोशयति । निवृत्यावलोक्य )
अये न कश्चिद् दृश्यते । आ,

तमसा संवृते लोके मम मार्गमपश्यतः ।
अपक्रमणहेतोस्तु कुमारेण प्रभा कृता ॥ १७ ॥

एष मार्गः । यावदपक्रामामि । अये इयं भगवती यमुना कालवर्षसम्पूर्णा स्थिता । अहो व्यर्थो मे परिश्रमः । किमिदानीं करिष्ये । भवतु, दृष्टम् ।

इमां नदीं ग्राहभुजङ्गसङ्कुलां
महोर्मिमालां मनसापि दुस्तराम् ।
भुजप्लवेनाशु गतार्थविक्लवो
वहामि सिद्धिं यदि दैवतं स्थितम् ॥ १८ ॥

( तथा कृत्वा सविस्मयम् ) हन्त द्विधा छिन्नं जलम्, इतः स्थितम्, इतः प्रधावति । दत्तो मे भगवत्या मार्गः । यावदपक्रामामि । ( अवतीर्य ) निष्क्रान्तोऽस्मि यमुनायाः । अये हुङ्कारशब्द इव श्रूयते । व्यक्तं घोषसमीपे वर्तते मन्दभाग्यः । आ, अत्र च समीपघोषे मम वयस्यो नन्दगोपः प्रतिवसति । स खलु मया कंसाज्ञया निगलितः कशाभिहतश्च । यावत् प्रविशामि । अथवा रात्रौ वसुदेवः प्रविष्ट इति शङ्किता गोपालका भविष्यन्ति । तस्मादिह न्यग्रोधपादपस्याधस्तात् प्रभातवेलां रजन्याः प्रतिपालयामि । भो भो न्यग्रोधदेवताः ! वयमयं बालो लोकहितार्थं कंसवधार्थं वृष्णिकुले प्रसूतश्चेद्, घोषात् कश्चिदिहागच्छतु । न, न, मम वयस्यो नन्दगोप एवागच्छतु ।

( ततः प्रविशति दारिकां गृहीत्वा नन्दगोपः । )

नन्दगोपः–( सशोकम् ) दालिए ! दालिए ! किं दाणि णो गेहल्पिं णव्वमिअ त्तदो णो उज्झिअ णं गच्छपि । पम्पदि हि सहिपपदसम्पादपदिपं अहो बज्जिअं अन्धआलं ।

---

१. ( ख ) मि ( हि ) ता. २. लोकहितार्थः ।

दुद्दिणविणट्टजोह्ना रत्ती वट्टइ णिमीलिआआरा ।
सम्पाउदप्पसुत्ता णीलणिवसणा जहा गोवी ॥ १९ ॥

अत्र हि अड्ढरत्ते अम्हाण कुडुम्बिणीए जसोदाए पसूदा इलं च
दारी वरादिणी आदमत्ता एव्व ओग्गदप्पाणा संवुत्ता । सुवे
३ अम्हाणां घोसस्स उस्सो इन्दयञ्ञो णाम उस्सवो भविस्सदि । ता मा
नु एदं दुक्खं गोवजणेहिं अणुहूअमाणं त्ति मए एक्काइणा
णिगलगुरुचलणेण इमं दालिअं गहिअ णिग्गदो म्हि । जसोदा
६ वि वरादिणी णेव जाणादि दालओ वा दालिआ वा पसूद त्ति
मोहं गदा । दालिए । दालिए ! । [ दारिके ! दारिके ! किमिदानीं
नो गेहलक्ष्म्या न रन्त्वा ततो न उज्झित्वा ननु गच्छसि । सम्प्रति हि
९ महिषस्कन्धसंपातसदृशोऽहो बलवानन्धकार ।

दुर्दिनविनष्टज्योत्स्ना रात्रिर्वर्तते निमीलिताकारा ।
संप्रावृतप्रसुता नीलनिवसना यथा गोपी ॥ १९ ॥

अद्य ह्यर्धरात्रेऽस्माकं कुटुम्बिन्या यशोदया प्रसूतेयं च दारी तपस्विनी
जातमात्रैवापगतप्राणा संवृत्ता । श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो
३ नामोत्सवो भविष्यति । तद् मा खल्वेतद् दुःखं गोपजनैरनुभूयमान
मिति मयैकाकिना निगलगुरुचरणेनेमां दारिकां गृहीत्वा निर्गतोऽस्मि ।
यशोदापि तपस्विनी नैव जानाति दारको वा दारिका वा प्रसूत इति
६ मोहं गता । दारिके ! दारिके ! । ]

वसुदेव —को नु खल्वयं रात्रौ परिदेवयति । अस्मत्समब्रह्मचारी
खल्वयं तपस्वी ।

९ नन्दगोप —किं दाणिं णो गेहलच्छिए ण रमिअ तदो णो उज्झिअ णं
गच्छसि । [ किमिदानीं नो गेहलक्ष्म्या न रन्त्वा ततो न उज्झित्वा ननु
गच्छसि । ]

वसुदेवः–स्वरेण प्रत्यभिजानामि । मम वयस्येन नन्दगोपेन भवितव्यम् । यावच्छब्दापयामि । वयस्य नन्दगोप । इतस्तावत् ।

नन्दगोपः– ( सभयम् ) अविहा को दाणि मं पुव्वसुदेण विअ सरयोगेण णन्दगोव ! णन्दगोव ! त्ति मं सद्दावेदि । किण्णु रक्खसो वा, आदु पिसाचो वा । ईदिसीए पदिभअजणणीए मदलिआ दालिआ मम हत्थे । किं णु हु करिस्सं । [ अविहा क इदानीं मां श्रुतपूर्वेणेव स्वरयोगेन नन्दगोप ! नन्दगोप ! इति मां शब्दयति । किं नु राक्षसो वा, उत पिशाचो वा । ईदृश्यां प्रतिभयजनन्यां मृता दारिका मम हस्ते । किं नु खलु करिष्यामि । ]

वसुदेवः–वयस्य नन्दगोप । अलमन्यशङ्कया । इतस्तावत् ।

नन्दगोपः–( कर्णं दत्त्वा । सावधानम् ) अम्मो, सरयोगेण भट्टा वसुदेव त्ति जाणामि । जाव उवसप्पिस्सं । अहव तहिं मम किं कय्यं । एदिणा कंसस्स रञ्ञो वअणं सुणिअ अवरद्धो कसाहिं ताडिअ णिअलेहिं बद्धो म्हि । ता ण गमिस्सं । अहव धिक्खु मे णिसंसभावं । मम गुणसहस्सं किदं, दुक्खे दुक्खइ, सुहे सुहिणो होदि, तहवि सुमरामि राअसासणेण किदं एक्कबन्धणं । जाव उवसप्पिस्सं । इयं दारी । किं करिस्सं । होदु एवं दाव करिस्सं । ( उपसृत्यावलोक्य च । सविस्मयम् ) पमादा खु अणी । एसो भट्टा वसुदेवो दालअं गह्णिअ ट्ठिदो । ( उपसृत्य ) जेदु भट्टा जेदु । [ अम्मो, स्वरयोगेन भर्ता वसुदेव इति जानामि । यावदुपसर्पामि । अथवा तत्र मम किं कार्यम् । एतेन कंसस्य राज्ञो वचनं श्रुत्वापराद्धः कशाभिस्ताडयित्वा निगलैर्बद्धोऽस्मि । तन्न गमिष्यामि । अथवा धिक् खलु मे नृशंसभावम् । मम गुणसहस्रं कृतं, दुःखे दुःख्यति, सुखे सुखी भवति, तथापि स्मरामि राजशासनेन कृतमेकबन्धनम् । यावदुपसर्पामि । इयं दारी । किं करिष्यामि । भवत्वेवं तावत् करिष्यामि ।

प्रभाता रजनी । एष भर्ता वसुदेवो दारकं गृहीत्वा स्थितः । जयतु भर्ता जयतु ।]

वसुदेवः–वयस्य नन्दगोप ! अपि भगवतीभ्यो गोभ्यः कुशलम् ।

नन्दगोपः–आम भट्टा ! कुपळं । [ आम भर्तः ! कुशलम् । ]

वसुदेवः–अथ भवतः परिजनस्य कुशलम् ।

नन्दगोपः–परिजणमिति । आम भट्टा ! कुपळं । [ परिजनमिति । आम भर्तः ! कुशलम् । ]

वसुदेवः–वयस्य ! किमिदानीं प्रच्छाद्यते ।

नन्दगोपः–भट्टा ! णत्थि किञ्चि । [ भर्तः ! नास्ति किंचित् । ]

वसुदेवः–मम खलु प्राणैः शापितः स्याद्, यदि सत्यं न ब्रूयात् ।

नन्दगोप.–का गई । पुणादु भट्टा । अज्ज अड्ढळत्ते अम्हाणं कुडुम्बिणीए, ण हि ण हि, तुम्हाणं दापीए जपोदाए पपूदा इअं च दाप्ती तवप्पिणी जादमत्ता एव्व ओग्गदप्पाणा पंवुत्ता । पुवे अम्हाणं घोषप्प उइदो इन्दयञ्ञो णाम उप्पवो भविप्पदि । ता मा खु एदं दुक्खं गोवजणेहिं अणुहूअमाणं त्ति मए एक्काइणा णिगळ-गुलुचळणेण इमं दाळिअं गह्णिअ णिग्गदो म्हि । जपोदा वि तवप्पिणी णेव जाणादि दाळओ दाळिआ वा पपूद त्ति मोहं गदा । [ का गतिः । शृणोतु भर्ता । अद्यार्धरात्रेऽस्माकं कुटुम्बिन्या, न हि न हि, युष्माकं दास्या यशोदया प्रसूतेयं च दासी तपस्विनी जातमात्रैवापगतप्राणा संवृत्ता । श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो नामोत्सवो भविष्यति । तद् मा खल्वेतद् दुःखं गोपजनैरनुभूयमानमिति मयैकाकिना निगलगुप्तचरणेनेमां दारिकां गृहीत्वा निर्गतोऽस्मि । यशोदापि तपस्विनी नैव जानाति दारको दारिका वा प्रसूत इति मोहं गता । ]

वसुदेवः–हन्त भोः ! न शक्यं लोकस्याधिष्ठानभूतं कृतान्तं वञ्चयितुम् । वयस्य ! काष्ठभूतं कलेवरं त्यज्यताम् ।

नन्दगोपः–ण पक्कुणोमि । भट्टा ! ण पक्कुणोमि । [ न शक्नोमि भर्तः ! न शक्नोमि । ]

वसुदेवः–ईदृशो लोकधर्मः । त्यज्यताम् ।

नन्दगोपः–जं भट्टा आणवेदि । दालिए ! दालिए ! । ( इति रोदिति । ) [ यद् भर्ताज्ञापयति । दारिके ! दारिके ! । ]

वसुदेवः–वयस्य ! अलमलं रुदितेन उत्तिष्ठोत्तिष्ठ ।

नन्दगोपः–( तथा कृत्वोपगम्य ) जेदु भट्टा । इमिणा दासजणेण किं कत्तव्वं । [ जयतु भर्ता । अनेन दासजनेन किं कर्तव्यम् । ]

वसुदेवः–वयस्य ! ननु त्वमपि जानासि दुरात्मना कंसेन मम षट् पुत्रा निधनमुपानीता इति ।

नन्दगोपः–जाणामि भट्टा ! जाणामि । [ जानामि भर्तः ! जानामि । ]

वसुदेवः–तत् सप्तमोऽयं दीर्घायुः । नास्ति मम पुत्रेषु भाग्यम् । तव भाग्याज्जीवितुं गृह्यताम् ।

नन्दगोपः–भाआमि भट्टा ! भाआमि । जदि कंसो लाआ पुणादि-वसुदेवस्स दालओ णन्दगोवस्स हत्थे णासो णिक्खित्तो त्ति, किं बहुणा, गदं एव्व मे सीसं । [ बिभेमि भर्तः ! बिभेमि । यदि कंसो राजा शृणोति–वसुदेवस्य दारको नन्दगोपस्य हस्ते न्यासो निक्षिप्त इति, किं बहुना, गतमेव मे शीर्षम् । ]

वसुदेवः–( आत्मगतम् ) हन्त विपन्नं कार्यम् । उत्कण्ठाः खलु नृशंसाः । तदेवं कथयामि । ( प्रकाशम् ) वयस्य नन्दगोप !

यद्यस्मि भवतः किञ्चिन्मया पूर्वकृतं भवेत् ।
तस्य प्रत्युपकारस्य कालस्ते समुपागतः ॥ २० ॥

वसुदेवः–हन्त भोः ! न शक्यं लोकस्याधिष्ठानभूतं कृतान्तं वञ्चयितुम् । वयस्य ! काष्ठभूतं कलेवरं त्यज्यताम् ।

६३ नन्दगोपः–ण पक्कुणोमि । भट्टा ! ण पक्कुणोमि । [ न शक्नोमि भर्तः ! न शक्नोमि । ]

वसुदेवः–ईदृशो लोकधर्मः । त्यज्यताम् ।

६६ नन्दगोपः–जं भट्टा आणवेदि । दाळिए ! दाळिए ! । ( इति रोदिति । ) [ यद् भर्ताज्ञापयति । दारिके ! दारिके ! । ]

वसुदेवः–वयस्य ! अलमलं रुदितेन उत्तिष्ठोत्तिष्ठ ।

६९ नन्दगोपः–( तथा कृत्वोपगम्य ) जेदु भट्टा । इमिणा दापजणेण किं कत्तव्वं । [ जयतु भर्ता । अनेन दासजनेन किं कर्तव्यम् । ]

वसुदेवः–वयस्य ! ननु त्वमपि जानासि दुरात्मना कंसेन मम
७२ षट् पुत्रा निधनमुपानीता इति ।

नन्दगोपः–जाणामि भट्टा ! जाणामि । [ जानामि भर्तः ! जानामि । ]

वसुदेवः–तत् सप्तमोऽयं दीर्घायुः । नास्ति मम पुत्रेषु भाग्यम् ।
७५ तव भाग्याज्जीवितुं गृह्यताम् ।

नन्दगोपः–भाआमि भट्टा ! भाआमि । जदि कंसो लाआ पुणादि-वसुदेवस्स दालओ णन्दगोवस्स हत्थे णासो णिक्खित्तो त्ति, किं
७८ बहुणा, गदं एव्व मे सीसं । [ बिभेमि भर्तः ! बिभेमि । यदि कंसो राजा शृणोति–वसुदेवस्य दारको नन्दगोपस्य हस्ते न्यासो निक्षिप्त इति, किं बहुना, गतमेव मे शीर्षम् । ]

८१ वसुदेवः–( आत्मगतम् ) हन्त विपन्नं कार्यम् । उत्कण्ठाः खलु नृशंसाः । तदेवं कथयामि । ( प्रकाशम् ) वयस्य नन्दगोप !

यद्यस्मि भवतः किञ्चिन्मया पूर्वकृतं भवेत् ।
तस्य प्रत्युपकारस्य कालस्ते समुपागतः ॥ २०

नन्दगोपः–किं किं पच्चुवकाळं त्ति । जदि कंपो वा होदु, कंपप्प पिदा उग्गपेणो वा होदु । आणेदु भट्टा दाळअं । [ किं किं प्रत्युपकार इति । यदि कंसो वा भवतु, कंसस्य पितोग्रसेनो वा भवतु । आनयतु भर्ता दारकम् । ]

वसुदेवः–वयस्य ! गृह्यताम् ।

नन्दगोपः–भट्टा ! अचोक्खिदम्हि, मदळिआ दाळिआ गहीदा । मुहुत्तअं पडिवाळेदु भट्टा । जाव जमुणाजळं गच्छिअ चोक्खं कळेमि । [ भर्तः ! अचौक्षितोऽस्मि, मृता दारिका गृहीता । मुहूर्तकं प्रतिपालयतु भर्ता, यावद् यमुनाजलं गत्वा शौचं करोमि । ]

वसुदेवः–वयस्य ! घोपवासात् प्रकृत्या शुचिरेव भवान् ।

नन्दगोप.–तेण हि अम्हाणं घोपप्प उइदं पङ्खुणा चोक्खं कळेमि । [ तेन ह्यस्माकं घोपस्योचितं पासुना शौचं करोमि । ]

वसुदेव.–कोऽत्र दोप. । क्रियतां शौचम् ।

नन्दगोप.–जं भट्टा आणवेदि । ( तथा कुर्वन् सविस्मयम् ) अच्छळीअं अच्छळीअं भट्टा ! अच्छळीअं । पङ्खुणि मग्गमाणप्प धळ्णीं भिन्दिअ जुगप्पमाणा पळिळधाळा उट्ठिदा । [ यद् भर्ताज्ञापयति । आश्चर्यमाश्चर्यं भर्त. । आश्चर्यम् । पासून् मार्गयतो धरणीं भित्वा युगप्रमाणा सलिलधारोत्थिता । ]

वसुदेवः–बालस्यैव प्रभावः । क्रियतां शौचम् ।

नन्दगोप.–भट्टा । तह । ( तथा कृत्वोपसृत्य ) भट्टा ! अअम्हि । [ भर्तः ! तथा । भर्तः ! अयमस्मि । ]

वसुदेवः–गृह्यताम्

नन्दगोपः–भट्टा ! अदिदुब्बळा मे बाहा मन्दळपदिपं बाळअं गह्विदुं ण पमत्था । [ भर्त. । अतिदुर्बलौ मे बाहू मन्दरसदृश बालक ग्रहीतु न समर्थौ । ]

वसुदेवः—वयस्य ! महाबलपराक्रमः खलु भवान् ।

२७ नन्दगोपः—सुणादु भट्टा मम बळपळक्कमं । सन्दाळिअमाणे वसभे सिङ्गं गहिअ मोचेमि । पङ्कुणिमग्गाणि भण्डसअडआणि आघट्टआमि । ईदिसो दाणि अहं दाळअं गह्णिदुं ण समत्थो म्हि ।

३० [ शृणोतु भर्ता मम बलपराक्रमं । सन्दार्यमाणे वृषभे शृङ्गं गृहीत्वा मोचयामि । पङ्कनिमग्नान् भाण्डशकटकान् आघट्टयामि । ईदृश इदानीमहं दारकं ग्रहीतुं न समर्थोऽस्मि । ]

३३ ( ततः प्रविशन्ति पञ्चायुधानि गरुडश्च )

गरुडः—

अहं सुपर्णो गरुडो महाजवः शार्ङ्गायुधस्यास्य रथो ध्वजश्च ।
पुरा हि देवासुरविग्रहेषु वहामि भो विष्णुबलेन विष्णुम् ॥ २१ ॥

चक्रः—

चक्रोऽस्मि कृष्णस्य कराग्रशोभी मध्याह्नसूर्यप्रतिमोग्रतेजाः ।
त्रिविक्रमे चामृतमन्थने च मया हृता दानवदैत्यसङ्घाः ॥२२॥

शार्ङ्गः—

शार्ङ्गोऽस्मि विष्णुकरलग्नसुवृत्तमध्या
स्त्री विग्रहात् पुरुषवीर्यबलातिदर्पा ।
यस्यार्थमाहवमुखेषु मयारिसङ्घाः
प्रभ्रष्टनागरथवाजिनराः प्रभग्नाः ॥ २३ ॥

कौमोदकी—

कौमोदकी नाम हरेर्गदाहमाज्ञावशात् सर्वरिपून् प्रमथ्य ।
मया हतानां युधि दानवानां प्रक्रीडितं शोणितनिम्नगासु ॥ २४ ॥

शङ्खः—

अहं हि शङ्खः क्षीरोदाद् विष्णुना स्वयमुद्धृतः ।
मम शब्देन नश्यन्ति युद्धे ते देवशत्रवः ॥ २५ ॥

१. प्रपीडितं ।

नन्दकः–

नन्दकोऽहं न मे कश्चित् सङ्ग्रामेष्वपराङ्मुखः ।
गच्छामि स्मृतमात्रेण विष्णुना प्रभविष्णुना ॥ २६ ॥

चक्रः–

चक्रशार्ङ्गगदाशङ्खनन्दका दैत्यमर्दनाः ।
वासुदेवस्य कार्यार्थं प्राप्ताः पारिषदा वयम् ॥ २७ ॥

तस्मादागम्यताम् । वयमपि मनुष्यलोकमवतीर्णस्य भगवतो
विष्णोर्बालचरितमनुचरितुं गोपालकवेषप्रच्छन्ना घोषमेवानतरि-
३ ष्यामः ।

सर्वे– तथास्तु । ( विष्णुमुपस्थिताः )

वसुदेवः–वयस्य ! बाल एव नमस्यताम् ।

६ नन्दगोपः–भट्टा ! तह । रा्अदा्लअ । णमो दे णमो दे । हीं,
होदु[1], अत्ताणं एव अत्ताणं णिव्वावेहि । अम्हाणं गोपजणप्प तुमं
गहिदुं को बळपळक्कमो । [ भर्तः ! तथा । राजदारक ! नमस्ते
९ नमस्ते । ही, भवतु, आत्मनैवात्मानं निर्वाहय । अस्माकं गोपजनस्य
त्वा ग्रहीतुं को बलपराक्रमः । ]

चक्रः–नमो भगवते नारायणाय । भगवन् ! महाविष्णो !

कार्याण्यकार्याण्यमरासुराणां
त्वया भविष्यन्ति बहूनि लोके ।
तस्माज्जनस्यास्य लघुत्वयोगात्
कुरु प्रसादं यदुवंशकेतो ! ॥ २८ ॥

वसुदेवः–गृह्यताम् ।

नन्दगोपः–जं भट्टा आणवेदि । ( गृह्णाति ) [ यद् भर्ताज्ञापयति । ]

३ वसुदेवः–वयस्य ! प्रभाता रजनी । प्रतिनिवर्ततां भवान् ।

नन्दगोपः–अच्छळीअं अच्छळीअं भट्टा ! अच्छळीअं । इमे

१. ( दिहळ होहि दूरत्तणस्सेव अत्ताण णिण्यामेमि ? ) २. °ण्य ( खिला ) मराणा. ३. व ( ल ? ला ) नि.

बन्धणे पडिदे । [ आश्चर्यमाश्चर्यं भर्तः ! आश्चर्यम् । इमे बन्धने पतिते । ]

वसुदेवः—सर्वमेतत् कुमारस्य प्रभावः । प्रतिनिवर्ततां भवान् ।

नन्दगोपः—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

वसुदेवः—अथवा एहि तावत् ।

नन्दगोपः—भट्टा ! अअम्हि । [ भर्तः ! अयमस्मि । ]

वसुदेवः—

जाने नित्यं वत्सलं त्वां प्रकृत्या
स्नेहोऽप्यस्मिन्नर्थ्यते रूढभावः ।
अस्मिन् काले दग्धभूयिष्ठशेषं
न्यस्तं बीजं रक्षितुं यादवानाम् ॥ २९ ॥

कुमारस्य किं करिष्यति भवान् ।

नन्दगोपः—सुणादु भट्टा । एकस्सिं गेहे गच्छिअ खीरं पिबइ, अण्णस्सिं गेहे गच्छिअ दधिं भक्खइ । अवरस्सिं गेहे गच्छिअ णवणीदं गिळइ । अण्णस्सिं गेहे गच्छिअ पाअसं भुञ्जइ । इदरस्सिं गेहे गच्छिअ तक्कघटं पलोअदि । किं बहुणा, अम्हाणं घोसस्स पदी होइ । [ श्रृणोतु भर्ता । एकस्मिन् गेहे गत्वा क्षीरं पिबति । अन्यस्मिन् गेहे गत्वा दधि भक्षयति । अपरस्मिन् गेहे गत्वा नवनीतं गिलति । अन्यस्मिन् गेहे गत्वा पायसं भुङ्क्ते । इतरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । किं बहुना, अस्माकं घोषस्य पतिर्भवति । ]

वसुदेवः—एवमस्तु । प्रतिनिवर्ततां भवान् ।

नन्दगोपः—जं भट्टा आणवेदि । ( निष्क्रान्तः । ) [ यद् भर्ताज्ञापयति । ]

वसुदेवः—ननु निर्गतो नन्दगोपः । यावदहमपि मधुरामेव यास्यामि । (परिक्रम्य) रुदितशब्द इव श्रूयते । किं नु खलु कंसभयात्

प्रतिनिवृत्तो नन्दगोपः। ( परिक्रम्य ) अये प्रत्यागतप्राणेयं दारिका। यावदिमां गृहीत्वा देवक्या हस्ते निक्षिप्य दुरात्मानं कंसं वञ्चयामि। ( गृहीत्वा ) अहो गुरुत्वमस्याः। एतदपि कुमारात् किञ्चिदन्तरं महद् भूतम्। यावदपक्रामामि। अये इयं भगवती यमुना तथैव स्थिता। यावदपक्रामामि। निष्क्रान्तोऽस्मि यमुनायाः। एतन्नगरद्वारम्। तथैव प्रसुप्तो मथुरायां सर्वो जनः। यावत् प्रविशामि। ( प्रविश्य ) इदं खलु दुरात्मनः कंसस्य गृहं ज्येष्ठाश्रितमिव दृश्यते। इदमस्मदीयं गृहं श्रियारूढमिव दृश्यते। यावदहमप्यन्त.पुरं प्रविश्य देवकीं समाश्वासयामि। ईश्वराः स्वस्ति कुर्वन्तु। ( निष्क्रान्तः। )

## प्रथमोऽङ्कः।

---

## अथ द्वितीयोऽङ्कः।

( तत. प्रविशन्ति चण्डालयुवतयः। )

सर्वाः-आअच्छ भट्टा ! आअच्छ। अम्हाणं कण्णाणं तुए सह विवाहो होदु। [ आगच्छ भर्त. ! आगच्छ। अस्माकं कन्याना त्वया सह विवाहो भवतु। ]

( ततः प्रविशति राजा। )

राजा-भोः ! किन्नु खल्विदम्।

यन्मेदिनी प्रचलिता पतिताग्रहर्म्या
सन्तारनौरिव विकीर्णमहोर्मिमाला।
सेव्यैः प्रधानगुणकर्मफलैर्निमित्तैः
किं वामतो व्यसनमभ्युदयो नु तन्मे ॥ १ ॥

सर्वाः–आअच्छ भट्टा ! आअच्छ । अम्हाणं कण्णआणं तुए सह विवाहो होदु । [ आगच्छ । भर्तः ! आगच्छ । अस्माकं कन्यकानां
३ त्वया सह विवाहो भवतु । ]

राजा–

यस्मान्न रक्षिपुरुषाः प्रचरन्ति केचिद्
यस्मान्न दीपकधराः प्रमदाश्चरन्ति ।
तस्मादिमा मम गृहं समनुप्रविष्टा
नीलोत्पलाञ्जननिभा भयदाः श्वपाक्यः ॥ २ ॥

सर्वाः–आअच्छ भट्टा ! आअच्छ । अम्हाणं कण्णआणं तुए सह विवाहो होदु । [ आगच्छ भर्तः ! आगच्छ । अस्माकं कन्यकानां
३ त्वया सह विवाहो भवतु । ]

राजा–अहो सृष्टाः खल्वेताश्चण्डालयुवतयः–

क्रोधेन नश्यति सदा मम शत्रुपक्षः
सूर्यः शशी हुतवहश्च वशे स्थिता मे ।
योऽहं यमस्य च यमो भयदो भयस्य
तं मापवादवचनैः परिधर्षयन्ति ॥ ३ ॥

सर्वाः–आअच्छ भट्टा ! आअच्छ । [ आगच्छ भर्तः ! आगच्छ । ]

राजा–श्रा अपध्वंस । कथं सहसैव नष्टाः । यावदिदानीमभ्य-
३ न्तरमेव प्रविशामि ।

( ततः प्रविशति शापः । )

शापः–हं, केदानीं प्रविशसि । इदं खलु मम गृहं संवृत्तम् ।

६ राजा–

कोऽयं विनिष्पतति गर्भगृहं विगाह्य
उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः ।

---

१. अवध्वंसः ।

भीमोग्रदंष्ट्रवदनो ह्यहिपिङ्गलाक्ष
क्रोधो महेश्वरमुखादिव गा प्रपन्न ॥ ४ ॥

को भवान् ।

शाप –किं न जानीषे माम् । अह खलु मधूकस्य ऋषे शापो
३ वज्रबाहुर्नाम ।

श्मशानमध्यादहमागतोऽस्मि चण्डालवेषेण विरूपचण्डम् ।
कपालमालातिविचित्रवेष कसस्य राज्ञो हृदय प्रवेष्टुम् ॥ ५ ॥

वस –असम्भाव्यमर्थं प्रार्थयसि ।

सौवर्णकान्ततरकन्दरकूटकुञ्ज
मेरु न कम्पयति वायसपक्षवात ।
हास्योऽसि भो । समकरक्षुभितोर्मिमाल
पातु य इच्छसि कराञ्जलिना समुद्रम् ॥ ६ ॥

शाप –काले ज्ञास्यसि ।

राजा–हं, कथ सहसैव नष्ट । यावदहमपि शयनमुपगम्य नयन
३ व्याक्षेप करोमि । ( स्वपिति । )

शाप –अये प्रसुप्त । अलक्ष्मि । खलति । कालरात्रि । महानिद्रे !
पिङ्गलाक्षि । तदागम्यतामभ्यन्तर प्रविशाम ।

६ सर्वा –एवं होदु । [ एव भवतु । ]

( प्रविश्य )

राजश्री –न खलु प्रवेष्टव्यम् ।

९ शाप –का भवती ।

श्रीः–हुं,

> लङ्कोपमं मम गृहं नविचिन्त्य मूढ !
> कस्याश्रयाद् विशसि मामवधूय रात्रौ ।
> किं भाषितेन बहुना न च शक्यमेतद्
> द्रष्टुं प्रवेष्टुमिह तेऽद्य मयाभिजुष्टम् ॥ ७ ॥

शापः–भगवति पद्मालये ! अपक्रामतु किल कंसशरीरात् । विष्णुराज्ञापयति ।

२ श्रीः–कथं विष्णुराज्ञापयतीति भोः ! कष्टम् ।

> न चाहं चिरसंवासात् त्यक्तुं शक्नोमि पार्थिवम् ।
> बलवान् गुणसङ्ग्राहो दृढं तपति मामयम् ॥ ८ ॥

भवतु । अनतिक्रमणीया विष्णोराज्ञा । तस्मादहमपि विष्णुसकाशमेव यास्यामि । ( निष्क्रान्ता । )

३ शापः–अपक्रान्ता राजश्रीः । हन्तेदानीमिदमस्माकमावासः संवृत्तः । अलक्ष्मि ! खलति ! कालरात्रि ! महानिद्रे ! पिङ्गलाक्षि ! अभ्यन्तरं प्रविश्य स्वजातिसदृशी क्रीडा क्रियताम् ।

६ सर्वाः–अज्जप्पहुदि अवणीदधम्मचारित्तो होहि । [ अद्यप्रभृत्यपनीतधर्मचारित्रो भव । ]

शापः–

> परिष्वजामि गाढं त्वां नित्याधर्मपरायणम् ।
> प्राप्नोमि मुनिशापस्त्वामचिरान्नाशमेष्यसि ॥ ९ ॥

( अन्तर्हितः । )

( प्रविश्य )

१ प्रतिहारी–जेदु भट्टा । [ जयतु भर्ता । ]

राजा–हं !

प्रतिहारी–भट्टा ! जसोधरा खु अहं । [ भर्तः ! यशोधरा खल्वहम् । ]

राजा–यशोधरे । किं त्वया मातङ्गीजनप्रवेशो न दृष्टः ।

प्रतिहारी–हं मादङ्गिजणत्ति । णिच्चं भट्टिपादमूले वत्तमाणस्स व जणस्स इह प्पवेसो दुल्लहो, किं उण मादङ्गिजणस्स । [ हं मातङ्गीजन इति । नित्यं भर्तृपादमूले वर्तमानस्यैव जनस्येह प्रवेशो दुर्लभः, किं पुनर्मातङ्गीजनस्य । ]

राजा–किं स्वप्नो नु मयानुभूतः । यशोधरे ! गच्छ । बालाकिः काञ्चुकीयः प्रवेश्यताम् ।

प्रतिहारी–जं भट्टा आणवेदि । ( निष्क्रान्ता । ) [ यद् भर्ताज्ञापयति । ]

( ततः प्रविशति काञ्चुकीयः । )

काञ्चुकीयः–जयतु महाराजः ।

राजा–आर्य बालाके ! प्रष्टव्यौ सांवत्सरिकपुरोहितौ—अद्य रात्रौ वातोद्भ्रामभूमिकम्पोल्कापाता दैवतप्रतिमाश्च प्रतिभासिताः किमर्थमिति ।

काञ्चुकीयः–महाराज । सांवत्सरिकपुरोहितौ विज्ञापयतः ।

राजा–किमिति ।

काञ्चुकीयः–श्रूयताम् ।

भूतं नभस्तलनिवासि नरेन्द्र ! नित्यं
कार्यान्तरेण नरलोकमिह प्रपन्नम् ।
आकाशदुन्दुभिरवैः समहीप्रकम्पै-
स्तस्यैष जन्मनि विशेषकरो विकारः ॥ १० ॥

राजा–

कस्मिञ्जाते सशैलेन्द्रा कम्पितेयं वसुन्धरा ।
ज्ञायतां तस्य पुत्रोऽयं किं वा जन्मप्रयोजनम् ॥ ११ ॥

इति ।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु महाराजः। प्रसूतवती किल देवकी।

राजा—किं प्रसूतम्।

काञ्चुकीयः—दारिका प्रसूता।

राजा—मा तावत्। एतानि महानिमित्तानि दारिकाप्रसूतिमात्रेण उत्पद्यन्ते।

काञ्चुकीयः—प्रसीदतु महाराजः। अनृतं नाभिहितपूर्वं मया। भवतो भृत्यवर्गपरिवृतायाः धात्र्या हस्ते दृष्टा सा।

राजा—अथवा ब्राह्मणवचनमनृतमपि सत्यं पश्यामि। गच्छ, वसुदेवस्तावदाहूयताम्।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (निष्क्रान्तः।)

राजा—धर्मशीलः सत्यवादी वसुदेवः। अथ तु मम समीपेऽनृतं न ब्रवीति। भवतु, श्रोष्यामस्तावत्।

(ततः प्रविशति वसुदेवः।)

वसुदेवः—

षण्णां सुतानां समुपेत्य नाशं वहन्निदं शोककृशं शरीरम्।
आहूयमानोऽकरुणेन राज्ञा गच्छाम्यहं भृत्य इवास्वतन्त्रः॥१२॥

भोः! एवंविधा लोकवृत्तिः।

स्मरतापि भयं राजा भयं न स्मरतापि वा।
उभाभ्यामपि गन्तव्यो भयादप्यभयादपि॥ १३॥

(उपसृत्य) शौरसेनीमातः! आस्यते।

राजा—यादवीमातः! आस्यताम्।

वसुदेवः—बाढम्। (उपविश्य) शौरसेनीमातः! किमर्थं वयमाहूताः।

राजा—यादवीमातः! प्रसूतवती किल देवकी।

वसुदेवः—अथ किम्, प्रसूतवती।

राजा—किं प्रसूतम् ।

वसुदेवः—( आत्मगतम् ) मयापि नामानृतं वक्तव्यं भविष्यति । अथवा कुमाररक्षणार्थमनृतमपि सत्यं पश्यामि । किमिदानीं करिष्ये । भवतु, दृष्टम् । ( प्रकाशम् ) दारिका प्रसूता तया ।

राजा—दारिका वा कुमारो वा हन्तव्यः सर्वथा मया ।

दैवं पुरुषकारेण वञ्चयिष्याम्यहं ध्रुवम् ॥ १४ ॥

( प्रविश्य )

प्रतिहारी—जेदु भट्टा । अम्हाअं भट्टिणी विण्णवेदि–दारिअत्ति बालेत्ति अ करीअदु किल महाराएण अणुक्कोसो । [ जयतु भर्ता । अस्माकं भट्टिनी विज्ञापयति–दारिकेति बालेति च क्रियतां किल महाराजेनानुक्रोशः । ]

वसुदेवः—शौरसेनीमातः ! क्रियतां तपस्विन्या देवक्या वाक्यम् । दारिकासु स्त्रीणामधिकतरः स्नेहो भवति ।

राज—किं भवान् स्मरति समयम् ।

मधूकस्य ऋषेः शापं श्रुत्वा मे समयस्तदा ।

देवक्या धारितान् गर्भान् दास्यामीति त्वया कृतः ॥१५॥

वसुदेवः—समय इति । एष न व्याहरामि ।

प्रतिहारी—भट्टा किं त्ति अम्हाअं भट्टिणीए णिवेदिदव्वं । [ भर्तः ! किमित्यस्माकं भट्टिन्यै निवेदयितव्यम् । ]

राजा—यशोधरे ! उच्यतां देवक्याः—न युक्तमिदानीं निर्बन्धमभिधातुम् । अन्यत् प्रियतरं करिष्यामीति ।

प्रतिहारी—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

राजा—यशोधरे ! एवं क्रियताम् ।

प्रतिहारी—सुट्ठं पविसदु किल भट्टा । [ सुखं प्रविशतु किल भर्ता । ]

वसुदेवः—विविक्तमिच्छता मयापि नाम परापत्यं निधनमुपनेतव्यं भवति । किन्तु खलु कुमारमेवानीय प्रयच्छामि । अथवा,

---

१. य ( या १ या )

दारिकेयं मृता पूर्वं पुनरेव समुत्थिता ।
अस्य बालस्य माहात्म्यान्नैषा वधमवाप्स्यति ॥ १६ ॥

यावदहमपि देवकीं समाश्वासयामि । ( निष्क्रान्तः । )

राजा—यशोधरे ! प्रवेश्यतां सा दारिका ।

प्रतिहारी—जं भट्टा आणवेदि । ( निष्क्रान्ता )

( ततः प्रविशति दारिकां गृहीत्वा धात्री रक्षिपुरुषाश्च । )

सर्वे—सणिअं सणिअं अय्या । इदं मज्झमदुवारं । पविसदु अय्या । [ शनैः शनैरार्या । इदं मध्यमद्वारम् । प्रविशत्वार्या । ]

धात्री—( प्रविश्य ) जेदु भट्टा । इअं दारिआ अम्हेहि चिरप्पहुदि रक्खिदा । [ जयतु भर्ता । इयं दारिकास्माभिश्चिरात् प्रभृति रक्षिता । ]

राजा—अहो राजदर्शनीयेयं दारिका । मयापि नाम स्त्रीवधः कर्तव्यो भवति ।

धात्री—सणिअं सणिअं भट्टा ! । [ शनैः शनैः भर्तः ! । ]

राजा—इयं कंसशिला । यावत् साहसमनुष्ठास्यामि ।
अयं हि सप्तमो गर्भ ऋषिशापबलोत्थितः ।
अस्मिन् नाशं गते गर्भे मम शान्तिर्भविष्यति ॥ १७ ॥

( गृहीत्वा प्रहृत्य ) अये,
एकांशः पतितो भूमावेकांशो दिवमुन्नतः ।
मां निहन्तुमिहोद्भूतः करैः शस्त्रसमुज्ज्वलैः ॥ १८ ॥

अये इयमिदानीं
तीक्ष्णाग्रं शूलमालम्ब्य रौद्रवेषेण जृम्भते ।
विनाशकाले सम्प्राप्ते कालरात्रिरिवोत्थिता ॥ १९ ॥

( ततः प्रविशति कार्त्यायनी सपरिवारा । )

कार्त्यायनी—
सुम्भं निसुम्भं महिषं च हत्वा कृत्वा सुरांस्तान् हतशत्रुपक्षान् ।
अहं प्रसूता वसुदेववंशे कार्त्यायनी कंसकुलक्षयाय ॥ २० ॥

---

१. एकांशपतितो । २. सुर( णां । ना )हतशत्रुपक्षान् ।

कुण्डोदरः—

कुण्डोदरोऽहमजितो रणचण्डकर्मा
देव्याः प्रसूतिजनितोममहानिनादः।
शीघ्रं प्रयामि गगनादवनीं विशालां
हन्तुं जिघांसुरसुरानतिवीर्यदर्पान्॥ २१॥

शूलः—

शूलोऽस्मि भूतमिह भूमितले प्रपन्नो
देव्याः प्रसादजनितोज्ज्वलचारुवेषः।
कंसं निहत्य समरे परिकर्षयामि
तं पादपं जलनिधेरिव कार्त्तिकेयः॥ २२॥

नीलः—

अहं हि नीलः कलहस्य कर्ता सङ्ग्रामशूरो नगराकुलश्च।
निहन्मि कंसं युधि दुर्विनीतं क्रौञ्चं यथा शक्तिधरः प्रकृष्टः॥२३॥

मनोजवः—

मनोजवो मारुततुल्यवेगो देव्याज्ञु कार्यार्थमिहोपयातः।
करोमि सङ्ग्रामशिरःसु दैत्यान् पक्षिर्न्नयानां निलयं यथैव॥२४॥

कात्यायनी—कुण्डोदर! शङ्कुकर्ण! महानील! मनोजव! सहागम्यताम्। भगवतो विष्णोर्बालचरितमनुभवितुं गोपालवेषप्रच्छन्ना घोषमेवावतरिष्यामः।

सर्वे—यदाज्ञापयति भगवती। (निष्क्रान्ता सपरिवारा कात्यायनी।)

राजा—अये प्रभाता रजनी

अतः प्रविश्य शान्त्यर्थं शान्तिकर्मोचितं गृहम्।
करोमि विपुलां शान्तिं मम शान्तिर्भविष्यति॥ २५॥

(निष्क्रान्ताः सर्वे।)

द्वितीयोऽङ्कः।

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति वृद्धगोपालकः । )

वृद्धगोपालकः—भो मेघदिण्ण ! क्खु, वषभदिण्ण ! क्खु, कुम्भदिण्ण ! क्खु, घोषदिण्ण ! क्खु पकाळेथ पकाळेथ गोधणं । एदेष्पि वुन्दावणे पकामं पाणीअं पादूणं हुम्भारवं करन्तो आअन्तु गोधणं । एषो गोवंज्जहादो णिक्कमिअ परिघट्टिअवम्मीअमूळो भुजङ्गेहिं कुवण्णेहिं णीलुप्पळादामेहि पिंगळग्गेहि विअ वषभो षोभदि । अण्णो वि एषो वषभो उपिदप्पपारिअपुच्छो णिकुञ्चिअजाणू षषीव धवळङ्गो अग्गविषाणेहि महीं उव्वहन्तो विअ षोभदि । जाव दाणि दामअं षद्दावआमि । अळे दामअ ! भअवदीणं पुथळे ओदाळिअ षहवच्छाणं तुवं पि आअच्छ । [ भो मेघदत्त ! खलु, वृषभदत्त ! खलु, कुम्भदत्त ! खलु, घोषदत्त ! खलु, प्रकालयत प्रकालयत गोधनम् । एतस्मिन् वृन्दावने प्रकामं पानीयं पीत्वा हुम्भारवं कुर्वदायतु गोधनम् । एष गोव्रजात् (1) निष्क्रम्य परिघट्टितवल्मीकमूलो भुजङ्गैः कुवर्णैः नीलोत्पलदाममिः शृङ्खलैरिव वृषभः शोभते । अन्योऽप्येष वृषभ उच्छ्रितप्रसारितपुच्छो निकुञ्चितजानुः शशीव धवलाङ्गोऽग्रविषाणाभ्यां महीमुद्वहन्निव शोभते । यावदिदानीं दामकं शब्दयामि । अरे दामक ! भगवतीः सुस्थलेऽवतार्य सहवत्सास्त्वमप्यागच्छ । ]

( ततः प्रविशति दामकः । )

दामकः—अहो महन्तं तिणजाळं षामिणो णन्दगोवष्प । पुदजणणदिणादो आळहिअ अहिअदळं आणन्दुम्मुदं वड्ढइ । भोदु, इह चिट्ठदु गोधणं, जाव मादुळं उवषप्पिष्पं । ( उपसृत्य ) मादुळ ! वन्दामि । [ अहो महत् तृणजालं स्वामिनो नन्दगोपस्य ।

1. ( गोवगाहनूवादो ? ) गोवषहजूहादो ( गोवृषभयूथात् इति च्छाया ).

सुतजननदिनादारभ्याधिकतरमानन्दाद्भुतं वर्धते । भवतु, इह तिष्ठतु गोधनं, यावन्मातुलमुपसर्प्स्यामि । मातुल ! वन्दे । ]

वृद्धगोपालकः–पन्ती होदु पन्ती होदु अम्हाणं गोधणस्स अ । [ शान्तिर्भवतु शान्तिर्भवत्वस्माकं गोधनस्य च । ]

दामकः–मादुळ ! जदप्पहुदि नन्दगोवपुत्ते पपूदे, तदप्पहुदि अम्हाणं गोधणं वज्जिअरोअं पंवुत्तं । ण ( णं ? ) पव्वाणं गोवजणाणं पीदी वड्ढइ । अण्णं च, खादे खादे मूळाणि, फळाणि गुम्हे गुम्हे । मधु केत्तिअं दुह्वदि क्खीरं तत्तअं एव्व घिदं । [ मातुल ! यदा-प्रभृति नन्दगोपपुत्रः प्रसूतः, तदाप्रभृत्यस्माकं गोधनं वर्जितरोगं संवृत्तम् । ननु सर्वेषां गोपजनानां प्रीतिर्वर्धते, अन्यच, खाते खाते मूलानि, फलानि गुल्मे गुल्मे । मधु कियद् दुह्यते क्षीरं तावद् एव घृतम् । ]

वृद्धगोपालकः–अण्णं च इदं अच्छळिअं । दपरत्तप्पपूदे णन्दगोववुत्ते पूतणा णाम दाणवी विपपम्पूरिदत्थणा णन्दगोवीए रूवं गह्निअ आअदा । तदो ताए दाळअं गह्निअ तप्प सुहे त्थणं पक्खित्तं । तदो तं विजाणिअ पुचिदा पाडिदा चम्मवपेपा दाणवी भविअ तत्तो एव्व मुदा । तदो मापमत्ते णन्दगोववुत्ते पअडो णाम दाणवो पअडवेपं गह्निअ आअद्दो । तं पि जाणिअं एकपादप्पहारेण चुण्णीकिदो पो वि दाणवो भविअ तत्तो एव्व मुदो । तदो मापपरिवुत्ते नन्दगोववुत्ते एक्कस्पिं गेहे गच्छिअ खीरं पिवइ, अण्णस्पिं गेहे गच्छिअ दधिं भक्खइ, एक्कस्पिं गेहे गच्छिअ णवणीदं गिळदि, अण्णस्पिं गेहे गच्छिअ पाअसं सुञ्जइ, अपरस्पिं गेहे गच्छिअ तक्कघटं पल्लोअदि । तदो रुट्ठाहि गोवजुवदीहि णन्दगोवीए उत्तं । तदो रुट्ठाए णन्द-गोवीए दामं गह्निअ तप्प मज्झे वन्धिअ पेपं उक्खळे वज्झं । तदो तं पि उक्खळं आघट्टअन्तं पेक्खिअ जमळज्जुणे

णाम दाणवे णिक्खित्तं। तदो दुवे एक्कीभूदे। तेयं अन्तळेण गच्छन्तेण णन्दगोववुत्तेण आघट्टअन्तेण पमूळविडवं चुण्णीकिदे ते वि दाणवे भविअ तत्तो एव्व मुदे। तदो गोवजणेहिं उत्तं-महाबळपळक्कमो अज्जप्पहुदि भट्टिदामोदळो णाम होदु त्ति। तदो आहावणप्पहावणमत्ते णन्दगोववुत्ते पळंबो णाम दाणवो णन्द-गोववेसं गह्णिअ आअदो। तदो पक्कळिपणं कण्ठे णिक्खिविअ गच्छन्तं तं विजाणिअ भट्टिणा पक्कळिपणेण तप्प दाणवप्प पीपे मुट्ठिप्पहारो किदो। तेण प्पहारेण उक्खित्तचक्खू पो वि दाणवो भविअ तत्तो एव्व मुदो गोवजणेहिं परिखुदो ताळहळाणि गहिदुं ताळवणं गदो। तहिं ताळवणे घेणुओ णाम दाणवो गद्दभवेसं गह्णिअ आअदो। तदो तं पि जाणिअ भट्टिदामोदळेण तप्प वामपादं गह्णिअ उक्खिविअ पादिदाणि ताळफळाणि। पो वि दाणवो भविअ तत्तो एव्व मुदो। तदो केसी णाम दाणवो तुळङ्गवेसं गह्णिअ आअदो। तदो तं पि जाणिअ भट्टिदामो-दळेण तप्प मुहे कोप्परो दिण्णो। तदो तेण दुवी (?) पाडिदो तुळङ्गो। पो वि दाणवो भविअ तत्तो एव मुदो। एदाणि अण्णाणि (अ) कम्माणि किदाणि भट्टिदामोदळेण। [अन्यच्चेदमाश्चर्यम्। दशरात्रप्रसूते नन्दगोपपुत्रे पूतना नाम दानवी विषसम्पूरितस्तना नन्दगोप्या रूपं गृहीत्वागता। ततस्तया दारकं गृहीत्वा तस्य मुखे स्तनः प्रक्षिप्तः। ततस्तां विज्ञाय सुप्ता पातिता सापि दानवी भूत्वा तत एव मृता। ततो मासमात्रे नन्दगोपपुत्रे शकटो नाम दानवः शकटवेषं गृहीत्वागतः। तमपि शातवैकपादप्रहारेण चूर्णी-कृतः सोऽपि दानवो भूत्वा तत एव मृतः। ततो मासपरिवृत्तो नन्दगोपपुत्र एकस्मिन् गेहे गत्वा क्षीरं पिबति, अन्यस्मिन् गेहे गत्वा दधि भक्षयति, एकस्मिन् गेहे गत्वा नवनीतं गिरति, अन्य-

स्मिन् गेहे गत्वा पायसं भुङ्क्ते अपरस्मिन् गेहे गत्वा तक्रघटं प्रलोकते । ततो रुष्टाभिर्गोपयुवतिभिर्नन्दगोप्यै उक्तम् । ततो रुष्टया नन्दगोप्या दाम गृहीत्वा तस्य मध्ये बद्ध्वा शेषमुलूखले बद्धम् । ततस्तदप्युलूखलमाघट्टयत् प्रेक्ष्य यमलार्जुनयोर्नाम दानवयोर्निक्षिप्तम् । ततो द्वावेकीभूतौ । तयोरन्तरेण गच्छता नन्दगोपपुत्रेणाघट्टयता समूलविटपं चूर्णीकृतौ तावपि दानवौ भूत्वा तत एव मृतौ । ततो गोपजनैरुक्त–महाबलपराक्रमोऽद्यप्रभृति भर्तृदामोदरो नाम भवतु इति । तत आधावनप्रधावनमात्रे नन्दगोपपुत्रे प्रलम्बो नाम दानवो नन्दगोपवेषं गृहीत्वागतः । ततः सङ्कर्षणं कण्ठे निक्षिप्य गच्छन्तं तं विज्ञाय भर्त्रा सङ्कर्षणेन तस्य दानवस्य शीर्षे मुष्टिप्रहारः कृतः । तेन प्रहारेणोत्क्षिप्तचक्षुः सोऽपि दानवो भूत्वा तत एव मृतः । गोपजनैः परिवृतस्तालफलानि ग्रहीतुं तालवनं गतः । तत्र तालवने धेनुको नाम दानवो गर्दभवेषं गृहीत्वागतः । ततस्तमपि ज्ञात्वा भर्तृदामोदरेण तस्य वामपादं गृहीत्वोत्क्षिप्य पातितानि तालफलानि । सोऽपि दानवो भूत्वा तत एव मृतः । ततः केशी नाम दानवः तुरङ्गवेषं गृहीत्वागतः । ततस्तमपि ज्ञात्वा भर्तृदामोदरेण तस्य मुखे कूर्परो दत्तः । ततस्तेन द्विधा पाटितस्तुरङ्गः । सोऽपि दानवो भूत्वा तत एव मृतः । एतान्यन्यानि ( च ) कर्माणि कृतानि भर्तृदामोदरेण । ]

दामकः– मादुल ! एव्वं दाव चिट्ठदु । अज्ज भट्टिदामोदलो इमस्सिं वुन्दावणे गोवकण्णआहि सह हल्लीसअं णाम पकीलिदुं आअच्छदि । [ मातुल ! सर्वं तावत् तिष्ठतु । अद्य भर्तृदामोदरोऽस्मिन् वृन्दावने गोपकन्यकाभिः सह हल्लीसकं नाम प्रक्रीडितुमागच्छति । ]
वृद्धगोपालकः– तेण हि सव्वेहि गोवजणेहि सह भट्टिदामोदलस्स हल्लीसअं पेक्खम्ह । [ तेन हि सर्वैर्गोपजनैः सह भर्तृदामोदरस्य हल्लीसकं पश्यामः । ]

दामकः– जं मादुळो आणवेदि । [ यद् मातुल आज्ञापयति । ]

( निष्क्रान्तौ । )

१०२ प्रवेशकः ।

( प्रविश्य )

वृद्धगोपालकः–

अणुदिअमत्ते पुय्ये पणमह पव्वादळेण पीपेण ।
णिचं जगमादूणं गोणाणं अमिदपुण्णाणं ॥ १ ॥

अहो अम्हाणं पक्कणाणं पमिद्धी । आडोवपज्जाओ पडहरूववेसाओ वाहळिदुं गच्छामो । अम्हाअं गोवकण्णआओ ! घोपपुन्दळि ! वणमाळे ! चन्दळेहे ! मिअक्खि ! आअच्छह आअच्छह पिग्घं ।

[ अनुदितमात्रे सूर्ये प्रणमत सर्वादरेण शीर्षेण ।
नित्यं जगन्मातृणां गवाममृतपूर्णानाम् ॥ १ ॥

अहो अस्माकं पक्कणानां समृद्धिः । आटोपसज्जाः पटहरूपवेषा व्याहर्तुं गच्छामः । अस्माकं गोपकन्यकाः ! घोषसुन्दरि ! वनमाले ! चन्द्ररेखे ! मृगाक्षि ! आगच्छतागच्छत शीघ्रम् । ]

( ततः प्रविशन्ति सर्वाः । )

सर्वाः– मादुळ ! वन्दामो । [ मातुल ! वन्दामहे । ]

वृद्धगोपालकः– दाळिआ ! एपो भट्टा दामोदळो गोक्खीरपण्डरेण भट्टिणा पङ्कळिपणेण पह गोवाळएहि अ परिवुदो गुहाणिक्खित्तो पिंहो विअ इदो एव्व आअच्छदि । [ दारिकाः ! एष भर्ता दामोदरः गोक्षीरपाण्डरेण भर्त्रा सङ्कर्षणेन सह गोपालकैश्च परिवृतः गुहानिक्षिप्तः सिंह इवेत एवागच्छति । ]

( ततः प्रविशति गोपजनपरिवृतो दामोदरः सङ्कर्षणश्च । )

दामोदरः– ( सविस्मयम् ) अहो प्रकृत्या रमणीयानां गोपकन्यकानां वेषग्रहणविशेषः ।

( सर्वे नृत्यन्ति । )

वृद्धगोपालकः–ही ही पुट्ठु ईदं । पुट्ठु वाइदं । पुट्ठु णच्चिदं । जाव अहं वि णच्चेमि । परिस्सन्तो खु अहं । [ ही ही सुष्ठु गीतम् । सुष्ठु वादितम् । सुष्ठु नर्तितम् । यावदहमपि नृत्यामि । परिश्रान्तः खल्वहम् । ] ( प्रविश्य )

गोपालकः–हा हा भट्टा अवक्कमदु इमादो देसादो । [ हा हा भर्ता अपक्रामत्वस्माद् देशाद् । ]

दामोदरः–दामक ! किमसि सम्भ्रान्तः ।

गोपालकः–एपो अरिट्ठवपभो णाम दाणवो पिण्डीकिदणीग्घादरूवो भूमिदळं खुरपुडेहि ळिहन्तो, जप्प घोपो मेघरवत्ति पङ्किदो जादो । [ एषोऽरिष्टवृपभो नाम दानवः पिण्डीकृतनिर्घातरूपो भूमितलं खुरपुटैर्लिखन्, यस्य घोषो मेघरव इति शङ्कितो जातः । ]

दामोदरः–एवं, प्राप्तोऽरिष्टर्षभः । इमा नो गोपदारिका दारकांश्च गृहीत्वैतत् पर्वतशिखरमारुह्य दुरात्मनो मम च युद्धविशेषं पश्यत्वार्यः । अहमस्य दर्पप्रशमनं करोमि ।

( सङ्कर्षणस्तैः सह निष्क्रान्तः । )

दामोदरः–एप एप दुरात्मारिष्टर्षभः ।

कृत्वा खुरैर्भूमितलं प्रभिन्नं शृङ्गैश्च कूलानि समाक्षिपंश्च ।
भयार्तगोपैः प्रसमीक्ष्यमाणो नदन् समाधावति गोवृषेन्द्रः ॥४॥

( ततः प्रविशत्यरिष्टर्षभः ।)

अरिष्टर्षभः–एप भोः !

शृङ्गाग्रकोटिकिरणैः शमियाल्लिखंश्च
शत्रोर्वधार्थमुपगम्य वृषस्य रूपम् ।
वृन्दावने सललितं प्रतिगर्जमान-
माक्रम्य शत्रुमहमद्य सुखं चरामि ॥ ५ ॥

हुङ्कारशब्देन ममेह घोषे स्रवन्ति गर्भा वनिताजनस्य ।
खुराग्रपातैर्लिखितार्धचन्द्रा प्रकम्पते सद्रुमकानना भूः ॥ ६ ॥

क नु खलु गतो नन्दगोपपुत्रः । भो नन्दगोपपुत्र ! कासि ।

दामोदरः— भो गोवृषाधम ! इत इतः । एष स्थितोऽस्मि ।

३ अरिष्टर्षभः— ( दृष्ट्वा ) अहो,

सारवान् खल्वयं बालो यो मां दृष्ट्वा महाबलम् ।
उग्ररूपं महानादं नैव भीतो न विस्मितः ॥ ७ ॥

दामोदरः—

किमेतद् भो ! भयं नाम भवतोऽद्य मया श्रुतम् ।
भीतानामभयं दातुं समुत्पन्नो महीतले ॥ ८ ॥

अरिष्टर्षभः — भो ! बालस्त्वम् । अतः खलु भयं न जानासि ।

दामोदरः— भो गोवृषाधम ! किं बाल इति मां प्रधर्षयसि ।

किं दृष्टः कृष्णसर्पेण बालेन न निहन्यते ।
बालेन हि पुरा क्रौञ्चः स्कन्देन निधनं गतः ॥ ९ ॥

भवितव्यम् ।

अपीदं शृणु मूर्ख ! त्वं कठिनोपलसञ्चयः ।
किं न पल्लवमात्रेण शैलो वज्रेण पातितः ॥ १० ॥

अरिष्टर्षभः— भो नन्दगोपपुत्र ! किं व्यवसितम् ।

दामोदरः— त्वां निधनमुपनेतुम् ।

२ अरिष्टर्षभः— समर्थो भवान् ।

दामोदरः— कः संशयः ।

अरिष्टर्षभः— तेन हि गृह्यतां स्वजातिसदृशं प्रहरणम् ।

६ दामोदरः— प्रहरणमिति । हं भोः !

गिरितटकठिनांसावेव बाहू ममैतौ
प्रहरणमपरं तु त्वादृशां दुर्बलानाम् ।
अथ मम भुजदण्डैः पीड्यमानश्च शीघ्रं
यदि न पतसि भूमौ नास्मि दामोदरोऽहम् ॥ ११ ॥

अरिष्टर्षभः– तेन हि प्रवर्ततां युद्धम् ।

दामोदरः– भो गोवृषाधम ! यदि ते शक्तिरस्ति, मां पादेनैकेन
३ स्थितं स्थानात् कम्पय ।

अरिष्टर्षभः– कोऽत्र संशयः । ( तथा कर्तुं चेष्टयित्वा मूर्छितः पतति । )

दामोदरः– भो गोवृष ! समाश्वसिहि समाश्वसिहि । अनेन वीर्येण
६ भवान् गर्वितः ।

अरिष्टर्षभः– ( आश्वस्य, आत्मगतम् ) अहो दुष्प्रसहोऽयं बालः ।

रुद्रो वायं भवेच्छक्रो विष्णुर्वापि स्वयं भवेत् ।
अमिथ्या खलु मे तर्कः स एव पुरुषोत्तमः ॥ १२ ॥

आ,

यत्र यत्र वयं जातास्तत्र तत्र त्रिलोकधृत् ।
दानवानां वधार्थाय वर्तते मधुसूदनः ॥ १३ ॥

भवतु । विष्णुना हतस्याप्यक्षयो लोको मे भविष्यति । तस्माद् युद्धं
करिष्यामि । ( प्रकाशम् ) भो नन्दगोपपुत्र ! पुनरपि जातो मे दर्पः ।

३ दामोदरः– हम् । तिष्ठ तिष्ठेदानीम् ।

किं गर्जसे भुजगतो मम गोवृषेन्द्र !
पातप्रवृद्ध इव वार्षिककालमेघः ।
एहि क्षिपामि धरणीतलमभ्युपेहि
यत्राहतस्तट इवाञ्जनपर्वतस्य ॥ १४ ॥

१. ( गोवर्त ! संवृत्तो )

( तथा कृत्वा ) एष दुरात्मारिष्टर्षभः,

विसृतरुधिरधाराक्लिन्ननासास्यनेत्रं
चलितककुदवालः प्रस्फुरत्पादकर्णः ।
निपतति विगतात्मा भूतले वज्रभिन्नो
गिरिरिव शिखराग्रैर्गोवृषो दानवेन्द्रः ॥ १५ ॥

( प्रविश्य )

दामकः—जेदु भट्टा । एषो भट्टा पङ्कव्विपणो पव्वदादो जमुणाहळे काळिओ णाम महाणाओ उट्ठिदो त्ति सुणिअ तं पडिगओ । वाळेहि वाळेहि भट्टा । पङ्कव्विपणं । [ जयतु भर्ता । एष भर्ता संकर्षणः पर्वताद् यमुनाह्रदे कालियो नाम महानाग उत्थित इति श्रुत्वा तं प्रतिगतः । वारय वारय भर्तः । संकर्षणम् । ]

दामोदरः—कालियो नाम मयापि श्रूयते सदर्पः पन्नगपतिः । भवत्विदमस्य दर्पप्रशमनं करोमि ।

गोब्राह्मणादयस्तेन सुजूप्यन्ते किल प्रजाः ।
अद्यप्रभृति शान्तात्मा निष्प्रभः स भविष्यति ॥ १६ ॥

( निष्क्रान्तौ । )

तृतीयोऽङ्कः ।

---

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति दामोदरः । )

दामोदरः—

एता मत्तचकोरशावनयनाः प्रोद्भिन्नकम्रस्तनाः
कान्ताः प्रस्फुरिताधरोष्ठरुचयो विस्रस्तकेशस्रजः ।
सम्भ्रान्ता गलितोत्तरीयवसनास्त्रासाकुलव्याहृता-
स्त्रस्ता मामनुयान्ति पन्नगपतिं दृष्ट्वैव गोपाङ्गनाः ॥ १ ॥

( ततः प्रविशन्ति गोपकन्यकाः । )

सर्वाः-मा खु मा खु भट्टा ! एदं जळासअं पविसिदुं । एसो खु
३ दुट्ठमहोरअकुळावासो । [ मा खलु मा खलु भर्तः ! एतं जलाशयं प्रवेष्टुम् । एष खलु दुष्टमहोरगकुलावासः । ]

दामोदरः— न खलु न खलु विषादः कार्यः । पश्यन्तु भवत्यः ।

निष्पक्षिव्यालयूथं भयचकितकरिव्रातविप्रेक्षिताम्भो-
गम्भीरं स्निग्धनीरं ह्रदमुदधिनिभं क्षोभयन् सम्प्रविश्य ।
गोपीभिः शङ्किताभिः प्रियहितवचनैः पेशलैर्वार्यमाणः
कालिन्दीवासरक्तं भुजगमतिबलं कालियं धर्षयामि ॥ २ ॥

सर्वाः-भट्टा ! सङ्कलिषण ! वाळेहि वाळेहि भट्टिदामोदळं ।
[ भर्तः ! संकर्षण ! वारय वारय भर्तृदामोदरम् । ]

१ ( प्रविश्य )

सङ्कर्षणः-अलमलं भयविषादाभ्याम् । दर्शितोऽनुरागः । पश्यन्तु भवत्यः ।

विषदहनशिखाभिर्यन्मुखात् प्रोद्गताभिः
कपिशितमशिवाभिश्चक्रवालं दिशानाम् ।
सरभसमभियान्तं कृष्णमालक्ष्य शङ्की
नमयति शिरसान्तर्मण्डलं चण्डनागः ॥ ३ ॥

सर्वाः–हं भट्टिदामोदलो वि तादिसो एव । [ हं मर्तृदामोदरोऽपि तादृश एव । ]

दामोदरः–सर्वप्रजाहितार्थं द्रुततरं नागं मे वशं करोमि । ( इति ह्रदं प्रविष्टः । )

सर्वाः–हा हा धूमो उट्ठिदो । [ हा हा धूम उत्थित । ]

दामोदरः–अहो ह्रदस्य गाम्भीर्यम् । इह हि,

सितेतराम्बुमद्गुकूलकान्तिद्गुतेन्द्रनीलप्रतिमानवीचिम् ।
इमामहं कालियधूमधूम्रां सान्तर्निपामि यमुनां करोमि ॥ ४॥

( निष्क्रान्त । )

( ततः प्रविशति वृद्धगोपालकः । )

वृद्धगोपालकः–हा भट्टा ! एसो कण्णआहिं वालिअमाणो जमुणाह्रदं पविट्ठो । मा खु मा खु पाहसं कलिअ पविसिदुं । एत्थ वग्घा वराहा हत्थिणो पाणीअं पिविअ तहिं तहिं एव्व विमरन्ति । कहं ण दिस्सदि । किं दाणिं करोमि । होदु, इमं दाव कुम्भवल्लाअं आरुहिअ णिज्झाआमि । ( आरुह्यावलोक्य ) हा हा धूमो उट्ठिदो । [ हा भर्तः ! एष कन्यकाभिर्वार्यमाणो यमुनाह्रदं प्रविष्टः । मा खलु मा खलु साहसं कृत्वा प्रवेष्टुम् । अत्र व्याघ्रा वराहा हस्तिनः पानीयं पीत्वा तत्र तत्रैव विम्रियन्ते । कथं न दृश्यते । किमिदानीं करोमि । भवतु, इमं तावत् कुम्भपलाशमारुह्य निध्यायामि । हा हा धूम उत्थितः । ]

सङ्कर्षण–पश्यन्तु भवन्तः ।

दामोदरोऽयं परिगृह्य नागं विक्षोभ्य तोयं च समूलमस्य ।
भोगे स्थितो नीलभुजङ्गमस्य मेघे स्थितः शक्र इवावभाति ॥५॥

वृद्धगोपालक–ही ही साहु भट्टा ! साहु । [ ही ही साधु भर्तः ! साधु । ]

( ततः प्रविशति कालियं गृहीत्वा दामोदरः । )

दामोदरः—एष भोः !

निर्मत्स्य कालियमहं परिविष्फुरन्तं
मूर्धाङ्कितैकचरणश्चलबाहुकेतुः ।
भोगे विषोल्बणफणस्य महोरगस्य
हल्लीसकं सललितं रुचिरं वहामि ॥ ६ ॥

सर्वाः—अच्छलीअं भट्टा ! अच्छलीअं । कालिअस्स पञ्च फणाणि अक्कमन्तो हल्लीसअं पकीळदि । [ आश्चर्यं भर्तः ! आश्चर्यम् । कालियस्य पञ्च फणानाक्रामन् हल्लीसकं प्रक्रीडति । ]

दामोदरः—यावदहमपि पुष्पाण्यपचिनोमि ।

कालियः—आः,

लोकालोकमहीधरेण भुवनाभोगं यथा मन्दरं
शैलं शर्वधनुर्गुणेन फणिना यद्वच्च यादोनिधौ ।
स्थूलाखण्डलहस्तिहस्तकठिनो भोगेन संवेष्टितं
त्वामेष त्रिदशाधिवासमधुना सम्प्रेषयामि क्षणात् ॥७॥

वृद्धगोपालकः—हा हा भट्टा ! । एसो भट्टिदामोदळो पुप्फाणुकारेहि पदेहि आआरवन्तं विअ जमुणाहळं महाणाअं पादेण परिघट्टअन्तो पुप्फाणि अवइणोदि । ( अवतीर्य ) साहु भट्टा ! साहु । फळ्ळेहि फळ्ळेहि । अहं वि सहाओ होमि । अहो भाआमि भट्टा ! भाआमि ।. जाव इमं वुत्तन्तं णन्दगोवस्स णिवेदेमि । ( निष्क्रान्तः । ) [ हा हा भर्तः ! एष भर्तृदामोदरः पुष्पानुकाराभ्यां पदाभ्यामाकारवन्तमिव यमुनाह्रदं महानागं पादेन परिघट्टयन् पुष्पाण्यवचिनोति । साधु भर्तः ! साधु । फलय फलय । अहमपि सहायो भवामि । अहो बिभेमि भर्तः ! बिभेमि । यावदिमं वृत्तान्तं नन्दगोपाय निवेदयामि । ]

दामोदरः–

विध्वस्तमीनमकराद् यमुनाह्रदान्ताद्
दर्पोच्छ्रयेण महता दृढमुच्छ्वसन्तम् ।
आशीविषं कलुषमायतवृत्तभोग-
मेष प्रसह्य सहसा भुवि विक्षिपामि ॥ ८ ॥

कालियः–एष भोः !

रोषेण धूमायति यस्य देहस्तेनैव दाहं पृथिवी प्रयाति ।
२ ज्वालावलीभिः प्रदहामि सोऽहं रक्षन्तु लोकाः समरुद्गणास्त्वाम् ॥९॥

दामोदरः–कालिय ! यदि ते शक्तिरस्ति, दह्यतां ममैको भुजः ।

कालियः–हहह,

चतुःसागरपर्यन्तां ससप्तकुलपर्वताम् ।
दहेयं पृथिवीं कृत्स्नां किं भुजं न दहामि ते ॥ १० ॥

हं, तिष्ठेदानीम् । एष त्वां भस्मीकरोमि । ( विषाग्निं मुञ्चति )

दामोदरः– हन्त दर्शितं ते वीर्यम् ।

३ कालियः–प्रसीदतु प्रसीदतु भगवान् नारायणः ।

दामोदरः–अनेन वीर्येण भवान् गर्वितः ।

कालियः–प्रसीदतु भगवान् ।

गोवर्धनोद्धरणमप्रतिमप्रभावं
बाहुं सुरेश ! तव मन्दरतुल्यसारम् ।
का शक्तिरस्ति मम दग्धुमिमं सुवीर्यं
यं संश्रितास्त्रिभुवनेश्वर ! सर्वलोकाः ॥ ११ ॥

भगवन् ! अज्ञानादतिक्रान्तवान्, सान्तःपुरः शरणागतोऽस्मि ।

दामोदरः–कालिय ! किमर्थमिदानीं यमुनाह्रदं प्रविष्टोऽसि ।

कालियः–भगवतो वरवाहनाद् गरुडाद् भीतोऽहमिह प्रविष्टोऽस्मि। तदिच्छामि गरुडादभयं भगवत्प्रसादात्।

दामोदरः–भवतु भवतु।

मम पादेन नागेन्द्र ! चिह्नितं तव मूर्धनि।
सुपर्ण एव दृष्ट्वेवमभयं ते प्रदास्यति ॥ १२ ॥

कालियः–अनुगृहीतोऽस्मि।

दामोदरः–प्रविशतु भवान्।

कालियः–यदाज्ञापयति भगवान् नारायणः।

दामोदरः–अथवा एहि तावत्।

कालियः–भगवन् ! अयमस्मि।

दामोदरः–अद्यप्रभृति गोब्राह्मणपुरोगासु सर्वप्रजास्वप्रमादः कर्तव्यः।

कालियः– भगवन् ! मद्विषदूषितमिदं जलम्। तदिदानीमेव विषं संहृत्य यमुनाह्रदान्निष्क्रामामि।

दामोदरः–प्रतिनिवर्ततां भवान्।

कालियः–यदाज्ञापयति भगवान् नारायणः। (सपरिजनो निष्क्रान्तः।)

दामोदरः–यावदहमपि ह्रदाद् गृहीतानि पुष्पाणि गोपकन्यकाभ्यः प्रयच्छामि।

सर्वाः–एसो भट्टा अम्हाणं हिअआणन्दं करन्तो अक्खदसरीरो इदो एव आअच्छदि। जेदु भट्टा। [ एष भर्तास्माकं हृदयानन्दं कुर्वन् अक्षतशरीर इत एवागच्छति। जयतु भर्ता। ]

सङ्कर्षणः–दिष्ट्या गोब्राह्मणहितं कृतम्।

दामोदरः–गृह्यन्तां पुष्पाणि।

सर्वाः–भट्टा ! एदाणि मुणिसङ्घेहि अणग्घदपुव्वाणि पुप्फाणि पच्चामिट्ठाणि चन्दादिच्चकिरणेहि अपरिमट्ठिदाणि। भाआमो भट्टा!!

[ भर्तः ! एतानि मुनिसङ्घैरनवचितपूर्वाणि पुष्पाणि परामृष्टानि चन्द्रादित्यकिरणैरपरिमर्दितानि । निमीमो भर्त. ! । ]

दामोदर.–पूर्वं दृष्टभया वित्रस्तास्तपरिजन्यः । न भेतव्यं न भेतव्यम् । इदानीं खलु मत्करस्पर्शनात् सौम्यभावमुपगतानि गृह्यताम् ।

सर्वा.–जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

( प्रविश्य )

भटः–भो गोपालक ! क गतो नन्दगोपपुत्रः ।

गोपालकः–एषो भट्टा कालिअं णाम महाणाअं परिपीडिअ गोवकण्णआहिं परिवुदो ट्ठिओ । [ एष भर्ता कालियं नाम महानागं परिपीड्य गोपकन्यकाभिः परिवृतः स्थितः । ]

भटः– ( उपगम्य ) भो नन्दगोपपुत्र ! अनुगतार्थनामधेयस्य महाराजस्योग्रसेनस्य पुत्रः कंसराजो भवन्तमाज्ञापयति ।

दामोदर.–कथमाज्ञापयतीति ।

भटः– मधुरायां धनुर्महो नाम महोत्सवो भविष्यति । तमनुभवितुं सपरिजनाभ्यां भवद्भ्यामागन्तव्यमिति ।

दामोदरः–आर्य ! अयं ननु देवरहस्यकालः ।

सङ्कर्षण –शीघ्रमिदानीं गमिष्याव. ।

दामोदरः–बाढम् । प्रथमः कल्पः । एष भोः !

प्रभ्रष्टरत्नमुकुटं परिकीर्णकेशं
विच्छिन्नहारपतिताङ्गदलम्बसूत्रम् ।
आकृष्य कंसमहमद्य दृढं निहन्मि
नागं मृगेन्द्र इव पूर्वकृतावलेपम् ॥ १३ ॥

( निष्क्रान्ता. सर्वे । )

चतुर्थोऽङ्कः ।

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति राजा । )

राजा–

श्रुत्वा व्रजे विपुलविक्रमवीर्यसत्त्वं
दामोदरं सह बलेन समाचरन्तम् ।
आदिश्य कार्मुकमहं तमिहोपनीय
मल्लेन रङ्गगतमद्य तु घातयामि ॥ १ ॥

ध्रुवसेन ! ध्रुवसेन !

( प्रविश्य )

भटः–जयतु महाराजः ।

राजा–ध्रुवसेन ! किमागतो नन्दगोपपुत्रः ।

भटः–श्रोतुमर्हति महाराजः--प्रविशन्नेव दामोदरः ससङ्कर्षणो गोपजनपरिवृतो रजकेभ्यो वस्त्राण्याच्छिद्य गृहीतवानिति श्रुत्वा महामात्रेणोत्पलापीडो नाम गन्धहस्ती सञ्चोदितस्तमभिघातयितुम् । ततः,

समापतन्तं सहसा समीक्ष्य संभीतगोपालकवृन्दमध्ये ।
बालो बलेनाद्रिनिभं गजेन्द्रं दन्तं समाकृष्य जघान शीघ्रम् ॥ २ ॥

राजा–कथं जघानेति । गच्छ । भूयो ज्ञायतां वृत्तान्तः ।

भटः–यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । एष इदानीं नन्दगोपपुत्र उत्सवाधिकारोच्छ्रितध्वजपताकमवसक्तमाल्यदामालङ्कृतमुत्थापितागुरुधूपसमाकुलं राजमहापथं प्रविश्य राजकुलद्वारे गन्धसमुद्गावसक्तहस्तां मदनिकां नाम कुब्जिकां दृष्ट्वा तस्या हस्ताद् गन्धमादाय स्वगात्रमनुलिप्य तेनैव हस्तेन कुब्जस्यानुमार्जनेन विगतकुब्जभावां तां कृत्वा

१. ध ( मे ) तगो॰

मुष्टिकः—

व्लोहमयमुट्ठिहत्थो णामेण अ मुट्ठिओ लुट्ठि ।
पादेमि अज्ज व्रामं गिळिवळ्कूटं जहा वज्जो ॥ ५ ॥
[ लोहमयमुष्टिहस्तो नाम्ना च मुष्टिको रुष्टः ।
पातयाम्यद्य रामं गिरीवरकूटं यथा वज्रः ॥ ]

भटः—एष महाराजः । उपसर्पेतां भवन्तौ ।

उभौ—( उपेत्य ) जेदु भट्टा । [ जयतु भर्ता । ]

राजा—चाणूरमुष्टिकौ ! सर्वप्रयत्नेन युवाभ्यामानृण्यं कर्तव्यम् ।

उभौ—सुणादु भट्टा । अड्ढिदकरणसन्धाबन्धप्पहारेहिं जुद्धविसेसेहिं सिद्धिं गच्छामो । हं पेक्खदु भट्टा । [ शृणोतु भर्ता । ( अङ्घित ? ) करणसन्धाबन्धप्रहारैर्युद्धविशेषैः सिद्धिं गच्छामः । हं पश्यतु भर्ता । ]

राजा—बाढमेवं क्रियताम् । ध्रुवसेन ! प्रवेश्यतां गोपदारकौ ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( ततः प्रविशतो दामोदरसङ्कर्षणौ ध्रुवसेनेन सह । )

दामोदरः—आर्य !

मर्त्येषु जन्म विफलं मम तानि घोषे
कर्माणि चाद्य नगरे धृतये न तावत् ।
यावन्न कंसहतकं युधि पातयित्वा
जन्मान्तरासुरमहं परिकर्षयामि ॥ ६ ॥

सङ्कर्षणः—

प्रविश्य रङ्गं कृतलोहमुष्टिं तं मुष्टिना मुष्टिकमद्य रुष्टम् ।
हत्वा चरिष्याम्यनिलप्रचण्डः प्रलम्बमम्भोदमिवान्तरिक्षे ॥७॥

भटः—एष महाराजः । उपसर्पेतां भवन्तौ ।

उभौ– आः कस्य महाराजः ।

भटः– सर्वस्य जगतोऽस्माकं च ।

दामोदरः– अद्यप्रभृति न भविष्यति ।

भटः– जयतु महाराजः । एतौ तौ ।

राजा– ( विलोक्य ) अयं स दामोदरः । अहो,

श्रीमान् मदान्धगजधीरविलासगामी
श्यामः स्थिरांसभुजपीनविकृष्टवक्षाः ।
पूर्वं श्रुतानि चरितानि न चित्रमस्य
लोकत्रयं हि परिवर्तयितुं समर्थः ॥ ८ ॥

अयं तु ललितगम्भीराकृतिः पूर्वजोऽस्य राम इति श्रूयते ।

अभिनवकमलामलायताक्षः शशिनिभमूर्तिरुदारनीलवासाः ।
रजतपरिघवृत्तदीर्घबाहुश्चलदसितोत्पलपत्रचित्रमालः ॥ ९ ॥

दामोदरः– आर्य ! एतावेवावाभ्यां युद्धसन्नद्धाविति मन्ये ।

सङ्कर्षणः– भवितव्यम् ।

राजा– ध्रुवसेन ! प्रवर्ततां युद्धम् ।

भटः– यदाज्ञापयति महाराजः ( माला क्षिपति । )

मल्लौ– अह्यो ! वादेथ¹ वादेथ सङ्खपटहाणि । [ अहो ! वादयत वादयत सङ्खपटहान् । ]

चाणूरः– एहि दामोदळ ! अज्ज मे भुजजुअळेहि सिद्धिं गच्छ । [ एहि दामोदर ! अद्य मे भुजयुगलेन सिद्धिं गच्छ । ]

दामोदरः–

प्राप्तोऽस्मि तिष्ठ मम वेगमिमं सहस्व

मुष्टिकः– ए ए ल्लाम ! अज्ज मे मुट्ठिपिट्ठिगत्तगळिअलुहिळपडळमज्जो जीविअं उज्झसि । [ ए ए राम ! अद्य मे मुष्टिपिष्टगात्रगलितरुधिरपटलमज्जो जीवितमुज्झसि ]

१. वादे ( ह ) वादे ( ह ).

सङ्कर्षणः–

त्वामद्य मुष्टिक ! यमाय निवेदयामि ।

६ ( सर्वे नियुद्धं कुर्वन्ति । )

दामोदरः–( चाणूरं निहत्य )

भग्नास्थिरेष निहतो

सङ्कर्षणः–

निहतो मयापि

दामोदरः–

कंसासुरं च यमलोकमहं नयामि ॥ १० ॥

( प्रासादमारुह्य कंसं शिरसि निगृह्य पातयित्वा ) एष एष दुरात्मा कंसः,

विस्तीर्णलोहितमुखः परिवृत्तनेत्रो
भग्नांसकण्ठकटिजानुकरोरुजङ्घः ।
विच्छिन्नहारपतिताङ्गदलम्बसूत्रो
वज्रप्रभग्नशिखरः पतितो यथाद्रिः ॥ ११ ॥

( नेपथ्ये )

हा हा महाराजः !

३ ( पुनर्नेपथ्ये )

भो भो वृष्णियोधाः ! अनावृष्टिशिवकहृदिकपृथुकसोमदत्ताक्रूरप्रमुखाः ! अयं खलु भर्तृपिण्डनिष्क्रयस्य कालः । शीघ्रमागच्छन्तु

६ भवन्तः ।

दामोदरः– आर्य ! संवार्यतां सैन्यम् ।

सङ्कर्षणः– अयमयं वारयामि ।

द्रुततरगरथेभभ्रान्तयोधोग्रनादं
विलसदमलखड्गप्रासशक्त्यृष्टिकुन्तम् ।

पवनबलविकीर्णं फेनजालोर्मिमालं
जलनिधिमिव दोर्भ्यां क्षोभयाम्येष सैन्यम् ॥ १२ ॥

( ततः प्रविशति वसुदेवः । )

वसुदेवः–भो भो मधुरावासिनः ! अलमलं साहसेन ।

ज्येष्ठोऽयं मम तनयस्तु रौहिणेयो
देवक्यास्तनयमिमं च किं न वित्थ ।
सन्नाहं त्यजत किमायुधैश्च कार्यं
कंसार्थे स्वयमिह विष्णुराजगाम ॥ १३ ॥

सङ्कर्षणः– ( विलोक्य ) अये तातः । तात ! सङ्कर्षणोऽहमभिवादये ।

दामोदरः–तात ! दामोदरोऽहमभिवादये ।

वसुदेवः–अक्षयविजयिनौ भवेतां भवन्तौ । सत्पुत्रजन्मफलमद्य प्राप्तवानस्मि ।

उभौ–अनुगृहीतौ स्वः ।

वसुदेवः–कोऽत्र ।

( प्रविश्य )

भटः–जयत्वार्यपुत्रः ।

वसुदेवः–अपविध्यन्तां कलेवराणि ।

भटः–यदाज्ञापयत्यार्यपुत्रः ।

गोपालकाः सर्वे–ही ही गोवाळआणं रज्जं संवुत्तं । [ ही ही गोपालकानां राज्यं संवृत्तम् । ]

वसुदेवः–कोऽत्र ।

भटः–जयत्वार्यपुत्रः ।

वसुदेवः–गच्छ, शीघ्रं दामोदरस्यादेशादनाधृष्टिमाज्ञापय–महाराजमुग्रसेनमपनीय निगलान्निर्वृत्ताभिषेकं कृत्वा प्रवेशयेति ।

भटः–यदाज्ञापयत्यार्यपुत्रः । ( निष्क्रान्तः । )

१८ वसुदेवः–अये,

नदन्ति सुरतूर्याणि वृष्टिः पतति कौसुमी ।
कंसान्तकस्य पूजार्थं प्रायो देवाः समागताः ॥ १४ ॥

( नेपथ्ये )

श्रीमानिमां कनकचित्रितहर्म्यमालां
विस्तीर्णराजभवनापणगोपुराट्टाम् ।
पायान् सदैव मधुरां कमलायताक्ष-
स्त्रैलोक्यजित् सुरवरस्त्रिदशेन्द्रनाथः ॥ १५ ॥

वसुदेवः–भो भो मधुरावासिनः ! शृण्वन्तु शृण्वन्तु भवन्तः ।
अस्य खलु दैत्येन्द्रपुरार्गलोत्पाटनपटोः सर्वक्षत्रपराङ्मुखावलोकिनो
३ वसुदेवसम्भवस्य वासुदेवस्य प्रसादात् पुनरधिगतराज्यस्योग्रसेनस्य
शासनमिदानीमवघुष्यते ।

सर्वे–प्रतिष्ठितमिदानीं वृष्णिराज्यम् ।

६ वसुदेवः–प्रवेश्यतां महाराजः ।

भटः–यदाज्ञापयत्यार्यपुत्रः । ( निष्क्रान्तः । )

( ततः प्रविशत्युग्रसेनः । )

९ उग्रसेनः–

चिरोपरोधसम्प्राप्तः क्लेशो मे केशिसूदनात् ।
अपनीतः स्ववीर्येण यथा विष्णोः नवक(तु ? वो)ः ॥१६॥

भगवत्प्रसादाद् व्यसनार्णवादुत्तारितोऽस्मि ।

( ततः प्रविशति नारदः । )

नारदः– कंसे प्रमथिते विष्णोः पूजार्थं देवशासनात् ।
सगन्धर्वाप्सरोमिश्च देवलोकादिहागतः ॥ १७ ॥

दामोदरः—अये देवर्षिर्नारदः । देवर्षे ! स्वागतम् । इदमर्घ्यं पाद्यं च ।

नारदः—सर्वं गृह्णामि । गन्धर्वाप्सरसो गायन्ति ।

नारायण ! नमस्तेऽस्तु प्रणमन्ति च देवताः ।
अनेनासुरनाशेन मही च परिरक्षिता ॥ १८ ॥

दामोदरः—देवर्षे ! परितुष्टोऽस्मि । किं ते भूयः प्रियमुपहरामि ।

नारदः—

प्रहृष्टो यदि मे विष्णुः सफलो मे परिश्रमः ।
गमिष्ये विबुधावासं सह सर्वैः सुरोत्तमैः ॥ १९ ॥

दामोदरः—गच्छतु भवान् पुनर्दर्शनाय ।

नारदः—यदाज्ञापयति भगवान् नारायणः । ( निष्क्रान्तः । )

( भरतवाक्यम् )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ २० ॥

( निष्क्रान्ताः सर्वे )

पञ्चमोऽङ्कः ।

अवसितं बालचरितम् ॥

---

# श्लोकानुक्रमणिका ।

## Metrical Analysis

(Stanzas marked with an asterisk are in Prakṛta.)

अनुष्टुप् ( श्लोक )

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयो. ।
गुरु षष्ठं च पादानां चतुर्णां स्यादनुष्टुभि ॥

Svapna. : I. 2, 7, 10, 15, IV. 6, 8, 9, 10; V. 6, 7, 8, 9, 10, 11; VI. 3, 6, 7, 9, 11, 12, 13, 14, 16, 17, 18, 19. Pratijña : I. 1, 2, 7, 9, 10, 15-17; II. 5-7, 10, 11, 13; III. 3, 7-9; IV. 8, 10, 14, 15, 17, 19-21, 23-25. Avimaraka : I. 4; II. 4, 10; IV. 7, 14; V. 3; VI. 3, 6 8, 12-14, 17, 22. Carudatta : I, 7, 19, 22, 24, 25, 27, 28; III. 12, 14-17, 19; IV. 2, 3, 5, 7. Pratima : I, 4, 6, 9-13, 15-17. 19-21, 23, 24, 26-28. 31; II. 3, 5, 6, 8-12, 15-18, 20; III. 4-6, 8, 10, 12, 14, 16, 19, 20, 23, 24; IV. 3-5, 11, 12, 14, 15, 19, 26, 28; V. 6, 8, 9, 12-15, 20-22; VI, 5, 9-11. 13-15; VII. 5, 8, 13, 15. Abhiṣeka : I. 3, 8, 12, 15. 18-21, 23, 24; II. 3, 7, 12, 13, 15, 16, 18-20, 23, 24; III. 5, 6, 8-11, 13-15, 18, 20, 22, 24-26; IV. 4, 8-11, 14, 16, 19-22; V. 2, 5, 8-10, 12, 14-17; VI. 8-10, 18, 20, 22, 23, 25-29, 35. Pañcaratram : I. 2, 7, 8, 11, 12, 15, 16, 24, 26, 32, 33, 35, 36, 41, 42, 44, 48-54; II. 4, 6, 8. 12-14, 16, 17, 19-21, 23, 25, 28, 34, 36-38, 41, 47-50, 52, 53, 55-59, 61-69, 71; III. 9, 10, 13, 15, 17-21, 23-26. Madhyamavyayoga : I. 2, 7, 12-23, 28-31. 33-40, 42-45, 47, 49-51. Dutavakyam : I. 1, 2, 7, 8, 16, 17, 20, 25-27, 29-31, 33, 34, 36, 38, 43, 46, 50, 55, 56. Dutaghaṭotkaca : I. 6, 7, 15, 17, 18, 21, 24-26, 28, 29, 31, 32, 34-40, 42, 44, 48-50. Karnabbaram : I, 2, 7, 12, 25 Urubhangam : I. 33, 37, 41-44, 46-49, 50, 62, 64, 65. Balacaritam : I. 3, 11-13, 15-17, 20, 25-27; II. 8, 9, 11, 13-19, 25; III. 7-10, 12, 13, 16; IV. 10, 12; V. 14, 16-20.

इन्द्रवज्रा

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।

Avimaraka: III. 6; IV. 2; VI. 2, 15, 16. Pratima: I. 29; IV. 25; VII. 14. Pañcarātram: I. 1, 23, 31, 40, 47; II. 11, 70; III. 3. Dūtaghaṭotkacam: I. 10, 16, 30. Balacaritam: IV 5, 9.

उपेन्द्रवज्रा

उपेन्द्रवज्रा जतजास्ततो गौ ।

Svapna: V. 13. Avimaraka: I. 9. Cārudatta: I. 10* (Pada *a* has one Syllable in excess). Abhiṣeka: I. 26; III. 3, 19; V. 11. Pañcarātram: I 13. Madhyamavyayoga: I. 52.

उपजाति

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।
उपेन्द्रवज्रा जतजास्ततो गौ ॥ (इत्यनयोरुपजातिः ।)

Svapna: V. 5. Pratijñā.: I. 5, 12; II. 1; IV. 2. Avimaraka: I 3, 10; II. 8, 9, 12; III. 18, IV. 6, 15, 16, 17, 21; V. I. 5; VI. 5, 10, 20, 21. Carudatta: I. 4, 12,* 23,*; III. 3, 7; IV. 1. Pratima: I. 1; III. 15; IV. 9, 13; V. 3, 4, 5; VI. 16; VII. 3. Abhiṣeka: II. 14; IV. 6; V. 1; VI. 14, 21, 32. Pañcarātram: I. 10, 19, 27, 43, 46; II. 9, 30, 60; III. 12, 14. Madhyamavyayoga: I. 9, 41. Dutavakyam: I. 9, 18, 19, 22, 28, 52, 53. Dutaghaṭotkacam: I. 2, 9, 19, 36. Karnabharam: I. 13, 17,– (Pada *b* is a वंशस्थ), Ūrubhangam: I. 30, 38, 45, 47, 48, 55. Balacaritam: I. 2. 4, 7, 21 (Pāda *a* is a वंशस्थ), 22, 24, 28; II. 5, 12, 20, 23, 24; III. 4, 6. IV. 4; V. 2, 7.

शालिनी

मात्तौ गौ चेच्छालिनी वेद लोकैः ।

Svapna: I. 13; IV. 6; VI. 10. Pratijña: I. 13, 18; II. 14; IV. 11. Avimāraka: I. 7; III. 5. Carudatta: III. 9. Pratimā: II. 13; III. 18; V. 17. Abhiṣeka I. 13,

Pañcarātram : I. 22, 28; II. 2, 10, 40, 46. Dūtaghaṭotkacam : I. 20. Bālacaritam : I. 29.

द्रुतविलम्बित

द्रुतविलम्बितमाह नभौ भरौ ।

Abhiṣeka : III. 4.

पुष्पिताग्रा

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।

Svapna : I. 5; VI. 1. Pratijñā : II. 12; IV. 5, 9. Avimāraka : II. 11; III. 4, 9, 11, 13; IV. 12, 20; V. 4; VI. 4, 9, 18. Cārudatta : I. 16, 20. Pratimā : II. 21; IV. 18; V. 19, VI. 8. Abhiṣeka : I 6, 14, 22; II. 2, 5, 11, 17, 25; III. 2, 16, 23; IV. 3, 5, 12, 18, V. 3; VI. 2, 12, 13, 17, 24, 33. Pañcarātram : I. 17, 30; II. 35, 51. Madhyamavyāyoga : I. 4, 24, 25. Dūtavākyam : I. 6, 37.

भुजंगप्रयात

भुजंगप्रयातं चतुर्भिर्यकारैः ।

Abhiṣeka : VI. 15.

वंशस्थ

जतौ तु वंशस्थमुदीरितं जरौ ।

Pratijñā : III. 2; IV. 18, 22. Avimāraka : IV. 23. Cārudatta : I. 3, 15*, 26; III. 4. Pratimā : III. 13; IV. 20; VI. 1, 2. Abhiṣeka : I. 2. Pañcarātram : I. 20, 25. II. 1, 18, 32, 33, 43, 44; III. 1, 8, 11, 16. Madhyamavyāyoga : I. 10. Dūtavākyam : I. 21. Dūtaghaṭotkacam : I. 13, 33. Karṇabhāram : I. 8, 11, 22 (Pāda a is इन्द्रवंशा), 23. Ūrubhaṅgam : I. 8. Bālacaritam : I. 18.

वैश्वदेवी

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ।

Svapna : I. 9. Pratijñā. : I. 3; II. 8. Abhiṣeka : I. 1; VI. 5.

प्रहर्षिणी

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।

Avimāraka : I. 8; IV. 3. Cārudatta : IV. 6. Pratimā I. 30; IV. 6; V. 18. Abhiṣeka : I. 7, 10. 17; III. 17. Pañcarātram : II. 3, 54; III. 5. Dutaghatotkacam : I. 4. Karṇabhāram : I. 5. Bālacaritam : I. 6; V. 13.

वसन्ततिलका

ज्ञेया वसन्ततिलका तभजा जगौ गः ।

Svapna. : I. 4, 6, 11; IV. 2; V. 1-3; VI. 2, 4, 5, 15. Pratijña : I. 4, 6; II. 2, 9; III. 4; IV. 4, 6, 7. Avimāraka: I. 2, 6, 11; II. 1, 2, 7, 13; III. 1, 7, 8, 10, 12, 15-17, 19; IV. 1, 5, 8, 13, 18, 22; V. 2, 7; VI. 1. 11, 19. Cārudatta : I. 2, 5, 8, 9, 11, 18; III. 1, 2, 5, 10, 18; IV. 4. Pratimā : I. 7, 8, 22; II. 2, 4; IV. 1, 2, 16, 22, 24; V. 10, 11; VI. 4, 6, 7, 12; VII. 4, 6, 7, 9-11. Abhiṣeka : I. 1, 4, 9, 11; III. 21, 27; IV. 7, 13, 23; V. 4, 7, 13, 16; VI. 1, 7. Pañcarātram : I. 18, 29, 34, 37, 39; II. 27, 31, 42; III. 22. Madhyamavyāyoga : I. 1, 3, 8, 11, 27, 48. Dūtavākyam : I. 3–5, 11–14, 23, 41, 42, 44, 49, 54. Dūtaghaṭotkacam : I. 1, 5, 11, 14, 23, 35, 45, 52. Karṇabhāram: I. 4, 6, 9, 16, 21, 24. Ūrubhangam : I. 2, 3, 7, 9, 11, 12, 19, 22, 31, 32, 36, 40, 54, 59, 60, 66. Bālacaritam : I. 5, 8, 23; II. 1–4, 6, 7, 10, 21, 22; II. 2, 5, 14; IV. 6, 8, 11, 13; V. 1, 3, 6, 8, 10, 11, 15.

मालिनी

ननमयययुतेयं मालिनी भोगिलोकैः ।

Pratijñā : I. 11, 14; II. 3; IV. 3, 13. Avimāraka : II. 5; III. 2; IV. 9. Cārudatta : I. 13, 14, 17, 29. Pratimā : I. 14, 26; III. 9, 21; IV. 10, 20, V. 7; VII. 1, 2, 12. Abhiṣeka : I. 16, 25; II. 8, 9, 21, 26; IV. 15; V. 15; VI. 4,

6, 11. Pañcarātram : I. 38, 45, II. 5, 15, 45, III. 2, 4. Madhyamavyāyoga : I. 5, 6, 32, 46. Dūtavākyam : I. 10, 35, 39, 40, 45, 47, 48. Dūtaghatotkacam : I. 43, 46. Karṇabhāram : I. 1, 3, 14, 18-20. Ūrubhangam : I. 6, 20, 26, 27, 39, 56, 57. Bālacaritam : I. 9, 10, III. 11, 15, IV. 3; V. 12.

पृथ्वी

जसा जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।

Avimāraka : II. 6

हरिणी

नसमरसला ग षड्वेदैर्हयैर्हरिणी मता ।

Svapna. : VI. 8. Pratimā : I. 18, III. 17; IV. 8; V. 2. Dūtaghatotkaca : I. 47. Ūrubhangam : I. 5, 10.

शिखरिणी

रसै रुद्रैश्छिन्ना यमनसभला ग शिखरिणी ।

Svapna : I. 14, 16. Pratijñā : II. 4. Avimāraka : I. 5; II. 3, III. 14. Pratimā : II. 14; III. 1, 2, 22; IV. 7. Abhiṣeka : IV. 17. Pañcarātram : I. 3, 14, 21; II. 7, 22, 24. Ūrubhangam : I 61.

शार्दूलविक्रीडित

Karṇabhāram : I. 10, 15. Ūrubhaṅgam : I. 1, 4, 13–18, 21, 23–25, 28, 29, 34, 35, 51–53, 58, 63. Bālacaritam : I. 1; III. 3; VI. 1, 7.

सुवदना

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना ।

Pratimā : III. 7, 11. Pañcarātram : I. 6. Dūtavākyam: I. 15.

स्रग्धरा

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।

Avimāraka : I. 1, 12; IV. 19. Pratimā : IV. 17. Abhiṣeka : III. 7, 12. Dūtavākyam : I. 51. Bālacaritam : IV. 2.

मेघमाला ( सङ्कृतिभेदः )

Pratimā : III. 3.

दण्डक ( चण्डवृष्टिः २न । ७र )

Avimāraka : V. 6.

वैतालीय

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्निरंतराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥

Pratijñā : III. 1*.

आर्या

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पंचदश सार्या ॥

Svapna. : I. 1; IV. 3, 4. Pratijñā : IV. 1*. Carudatta : I. 1*, 21. Pratimā : I. 2; II. 7. Balacaritam : I. 19*; III. 1*; V. 4*.

उपगीति

आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत् ।
कामिनि तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥

Balacaritam : V. 5.*

| | Svapna | Pra.-Yaug. | Avimāraka | Cārudatta | Pratimā | Abhiṣeka | Pañcarātram | M. Vyāyoga | Dūtavākyam | Dūta-ghaṭa | Karṇabhāram | Ūrubhaṅga | Bālacarita | Total |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| Śloka .. | 26 | 29 | 15 | 17 | 75 | 68 | 76 | 34 | 22 | 22 | 4 | 12 | 37 | 437 |
| Indravajrā ... | ... | ... | 5 | ... | 3 | ... | 8 | ... | ... | 3 | ... | ... | 2 | 21 |
| Upendravajrā .. | 1 | ... | 1 | 1 | ... | 4 | 1 | 1 | ... | ... | ... | ... | ... | 9 |
| Upajāti .. | 1 | 4 | 17 | 6 | 9 | 6 | 10 | 2 | 7 | 4 | 2 | 6 | 17 | 91 |
| Śālinī .. | 3 | 4 | 2 | 1 | 3 | 1 | 6 | ... | ... | 1 | ... | ... | 1 | 22 |
| Drutavilambita | ... | ... | ... | ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | 1 |
| Pushpitagrā .. | 2 | 3 | 11 | 2 | 4 | 22 | 4 | 3 | 2 | ... | ... | ... | 2 | 55 |
| Bhujangaprayāta | ... | ... | ... | ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | 1 |
| Vaṁśastha .. | ... | 3 | 1 | 4 | 4 | 1 | 12 | 1 | 1 | 2 | 4 | 1 | 1 | 35 |
| Vaiśvadevī .. | 1 | 2 | ... | ... | ... | 2 | ... | ... | ... | ... | ... | ... | ... | 5 |
| Praharṣiṇī .. | ... | ... | 2 | 1 | 3 | 4 | 3 | ... | ... | 1 | 1 | ... | 2 | 17 |
| Vasantatilaka ... | 11 | 8 | 27 | 12 | 22 | 15 | 9 | 6 | 13 | 8 | 6 | 16 | 26 | 179 |
| Mālinī .. | ... | 5 | 3 | 4 | 10 | 11 | 7 | 4 | 7 | 2 | 6 | 7 | 6 | 72 |
| Pṛthvī ... | ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | 1 |
| Hariṇī .. | 1 | ... | ... | ... | 4 | ... | ... | ... | ... | 1 | ... | 2 | ... | 8 |
| Śikhariṇī .. | 2 | 1 | 3 | ... | 5 | 1 | 6 | ... | ... | ... | ... | 1 | ... | 19 |
| Śārdulavī .. | 6 | 5 | 5 | 5 | 9 | 15 | 9 | 1 | 2 | 8 | 2 | 21 | 4 | 92 |
| Suvadanā .. | ... | ... | ... | ... | 2 | ... | 1 | ... | 1 | ... | ... | ... | ... | 4 |
| Sragdharā ... | ... | ... | 3 | ... | 1 | 2 | ... | ... | 1 | ... | ... | ... | 1 | 8 |
| Meghamālā .. | ... | ... | ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | ... | 1 |
| Daṇḍaka .. | ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | 1 |
| Vaitālīya ... | ... | 1 | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | 1 |
| Āryā . | 3 | 1 | .. | 2 | 2 | ... | ... | ... | ... | ... | ... | ... | 3 | 11 |
| Upagīti ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | ... | 1 | 1 |
| Total ... | 57 | 66 | 97 | 55 | 157 | 154 | 152 | 52 | 56 | 52 | 25 | 66 | 103 | 1092 |

# List of irregular Constructions and Solecisms

## Irregular Sandhi

स्मराम्यवन्त्याधिपतेः सुतायाः । P. 39
हत्वा रिपुप्रभवमप्रतिमं तमौघम् । P. 316
कोऽयं विनिष्पतति गर्भगृहं विगाह्य[1] उल्कां प्रगृह्य । P. 526

१. इह विसन्धिता दृश्यते । श्लोकार्धे च संहिता नित्या ।

## Use of Parasm. for Ātm.

आपृच्छामि भवन्तौ । P. 11
साधुजनहस्तगतैषा नोत्कण्ठिष्यति । P. 12
दृष्टिर्न तृप्यति परिष्वजतीव साङ्गम् । P. 143
पुत्रं पितेव च परिष्वजति प्रहृष्टः । P. 171
गाढं परिष्वज सखे । P. 175
आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च । P. 298
आपृच्छामि भगवतीम् । P. 310
तं हत्वा क इहोपलप्स्यति चिरं स्वैर्दुष्कृतैर्जीवितम् । P. 462
परिष्वजामि गाढं त्वाम् । P. 528
रोषेण धूमायति यस्य देहः । P. 553

## Use of Ātm. for Parasm.

अपरिचयात्तु न श्लिष्यते मे मनसि । P. 3
काले काले छिद्यते रुह्यते च । P. 50
दैवप्रामाण्याद् भ्रश्यते वर्धते वा । P. 58
कथमगणितपूर्वं द्रक्ष्यते तं नरेन्द्रः
कथमपुरुषवाक्यं श्रोष्यते सिद्धवाक्यः । P. 67
कुरङ्गीमभिलषमाणो । P. 154
यदि विमुच्ये रक्ष्यते भवान् । P. 165
शीतशशिनः कान्तिः परिम्लायते । P. 198

## Intransitive roots used transitively

इमं हृद्वीणं ण रमामि । P. 223
अदो एव्व एदं अहं ण रमामि । P. 224
सीता मामविवेकिनी न रमते । P. 333
स्रवति धनुरश्रं शरनदीम् । P. 398
मत्प्रत्यक्षं लज्जते क्षेप पुत्रम् । P. 413

## Simplex for the Causative

भूयः परव्यसनमेत्य विमोक्तुकामा । P. 113
अमच्चो अय्यभूदिओ ... महाराएण पूइदो पत्थिदो अ । P. 127
तात अभिवादनक्रममुपदेष्टुमिच्छामि मातॄणाम् । P. 220
मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते प्रतिग्रहीतुमिच्छामि । P. 291

## Irregular Compounds

एवं लोकस्तुल्य[1] धर्मो वनानां । P. 50
स्वस्ति भवते सपत्नीकाय[2] । P. 185
जयवर्मणे सुमित्रा प्रदीयतां काशिराज्ञे[3] । P. 187
व्यूढोरा[4] वज्रमध्यो । P. 429
उत्सादयिष्यन्निव सर्वराज्ञः ।[3] P. 446

१. 'धर्मादनिच् केवलात्' (V. 4-124) इति 'अनिच्' विहितः । सोऽत्र न कृतः । २. 'प्रकृत्याशिषि' (VI. 3-83) इति सूत्रेण आशिषि विहितः प्रकृतिभावः सहशब्दस्य । अत्र तु तस्य समावः विधिविरुद्धः । ३. 'राजाहः सखीभ्यः' (V. 4-91) इति समासान्तप्रत्ययो न कृतः । ४. 'उरःप्रभृतिभ्यः कप्' (V. 4-151) इति नित्यं 'कप्' प्रत्ययविधानम् ।

## Irregular Syntactial Combinations

अय्ये[1] मा दाणिं अय्या चिन्तिअ । P. 18
मा मा[1] भूयो अवहरणिअ । P. 23
अय्यउत्तो इह आआच्छिअ इमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा

मेत्तिअं । P. 23

दुःखं त्यक्तुं बद्धमूलोऽनुरागः । P. 32
मा[1] दाणिं भवं अणत्थं चिन्तिअ । P. 44
मा[1] दाणिं भट्टा ! अदिमत्तं सन्तप्पिदु । P. 50
मा[1] खु मा खु मं धरिदुं । P. 87
यद्येवं नलागिरिग्रहणार्थं विमुक्तश्चेद्[2] । P. 104
याचेमि मा[1] णिब्बन्धिअ । P. 134
इदं चे[2]देकचित्ताना यद्यग्निः साधयिष्यति । P. 151
यावत्[3] प्रच्छन्नरूपेण तावत् संवत्सर व्रजेः । P. 178
अलं दाणि भवं अदिमत्तं सन्तप्पिदुं । P. 196
मा[1] स्वयं मन्युमुत्पाद्य । P. 258
अलमुपहतासु[4] स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् । P. 259
अलं[4] दाणि महाराओ अदिमत्तं सन्तप्पिअ परवसं अत्ताणं कादु । P. 266
परस्त्राक्रामलं[4] कर्तुं गृह्यतां भरतो ह्ययम् । P. 279
कुमार ! अलं[4] गुरुजनापवादमभिधातुम् । P. 285
अलमिदानीं[4] व्रणे प्रहर्तुम् । P. 290
हं अय्यउत्त ! मा[1] खु मा खु एवं भणिदुं । P. 313
—भो भो बलाध्यक्ष ! सन्नाहमाज्ञापय[5] वानरवाहिनीम् । P. 347
राज्ञा वानरवाहिनी प्रतिभया सन्नाहमाज्ञापिता[5] । P. 347
[6]यदि दातव्ये राज्ये किमस्माभिः सह मन्त्रयसे । P. 385
मा[1] खु मा खु भट्टा एद जळासअं पविसिदुं । P. 544
मा[1] खु मा खु पाहसं कळिअ पविसिदुं । P. 545

१. इह मा शब्दयोगे 'क्त्वा' प्रत्ययः 'तुमुन्' प्रत्ययो वा प्रयुक्तोऽशास्त्रीयः । २. यदिशब्दचेच्छब्दयोः सहप्रयोगोऽपूर्वः । ३. 'अत्र' यावत्, 'तावत्' शब्दौ केवलं पादपूरणार्थकौ द्रष्टव्यौ । ४. "अलंखल्वोः" (III. 4. 18) इति सूत्रेण अलं खलु इत्येतयोः प्रतिषेधवाचिनोरुपपदयोर्धातोः क्त्वा प्रत्ययो विहितः । अत्र तु 'तुमुन्' कृतः । ५. अत्र द्विकर्मकत्व चिन्त्यम् । ६. अत्र यदिशब्दस्य सप्तम्याश्च सहप्रयोगोऽपूर्वः ।

## Anomalous Formations

अद्यापि गन्धेन न संश्रयन्ते[1] । P. 150

ताते धनु[2] र्नमयि । P. 261

क्रमेण शुश्रूषयिष्ये[3] । P. 289

सुस्पुसह्रदन्वो[3] । P. 290

सुष्ठु खल्विह लक्ष्मणः शुश्रूषयतु[3] । तत्रस्थो मां भरतः शुश्रूषयतु[3] । P. 290

शुश्रूषयस्व भगवन्तम् । P. 299

न प्रत्यायति शोकार्ता । P. 337

विजयविख्यात विंशद्बाहुशालिनि[5] । P. 359

लङ्कामभ्युपयामि बन्धुसहितः सीतां समाश्वासितुम्[6] । P. 365

अहमेवैनं मोक्षयामि[7] । P. 411

अश्वान् क्षिपन् सक्तिवर्म[8] । P. 445

द्रुपदराजसुतां रुदन्तीम्[9] । P. 445

व्यायामोष्णं गृह्य[10] चापं करेण । P. 466

अहमिव पाण्डवा शुश्रूषयितव्याः[4] । P. 504

घोषे जागरिमा[11] । P. 539

१. संश्रयन्ते इति प्रामादिकं रूपम् । "संश्रियन्ते" इति तु युक्तम् । २. अस्य स्थाने 'नमय' इति वा 'नमतु' इति वा पठितुं योग्यम् । ३. 'ज्ञाश्रुस्मृदृशां सनः' (I. 3. 57) इति सूत्रेण सन्नन्तात् आत्मनेपदं विहितम् । अत्र तु स्वार्थे णिचः प्रयोगः अवैधः । ४. 'प्रत्येति' इत्यर्थे "प्रत्यायति" रूपं चिन्त्यम् । प्रत्याङ्पूर्वस्यायते रूपमेतदिति समाधेयम् । अपनेयात्मनेपदं च न कृतम् । ५. 'विंशति' इत्यस्य स्थाने 'विंशद्'– इति रूपं प्रामादिकम् । ६. अत्र णिज्लोपः प्रामादिकः । ७. "मोक्षे" "मुमुक्षे" इति शास्त्रीयं रूपम् । स्वार्थे णिजविहितः । ८. 'सक्तेतरम्' इत्येवेप्सितं भाति । 'स क्षितः' इति पाठः सूचितः । ९. इह 'नुम्' अशास्त्रीयः । १०. करस्थाने स्यप्पूर्वः अशास्त्रीयश्च । ११. अत्र जागरशब्दात् इमनिचः प्रयोगः चिन्त्यः ।

## Implied alternative sentences

[1]क्रीडेयं नियमस्पृहा । P. 257
[1]किं क्षमा निर्मनस्विता । P. 260
[1]कथं तिष्ठतु, यात्विति । P. 285
[1]तान् धारयिष्यसि, मृगैः सह वर्तयन्तु । P. 383
[1]अनुज्ञातोऽसि किं तेन, न राज्ञा सारथिर्भवान् । P. 396
[1]इहायं समुदाचारो, ग्रहणं परिभूयते । P. 404

१. अत्र हि विकल्पः आक्षिप्त । वाशब्दस्याप्रयोगात् ।

## Use of मे at the beginning of a quarter

[1]मे शापितो न परिरक्षसि चेत् स्वराज्यम् । P. 291

१. अत्र पादादौ युष्मच्छब्दस्य " मे " आदेशः न युक्तः ।

---

## APPENDIX C

References to Bhasa or his works in literature—

( १ ) भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥

Attributed to Rajaśekhara in Suktimuktavali

( २ ) "तुल्यवेतनोऽस्मि, भवद्भिः सहभोग्यमिदं राज्य, मयाभिहितः परोऽभिहन्तव्यः " इति, वेदेष्वप्यनुश्रूयते--
'समाप्तदक्षिणाना यज्ञानामवभृथेषु सा,ते गतिर्या शूराणाम्' इति अपीह श्लोकौ भवत —
' यान् यज्ञसङ्घैस्तपसा च विप्रा. स्वर्गैषिण. पात्रचयाश्च यान्ति ।
क्षणेन तान्यप्यतियान्ति शूरा प्राणान् सुयुद्धेषु परित्यजन्त ॥
' नव शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत् तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥
इति मन्त्रिपुरोहिताभ्यामुत्साहयेद् योधान् ॥

From Kautalıya Arthaśāstra, Adhıkarana X–Adhyāya III.

( ३ ) प्रथितयशसा भाससौमिल्लकविपुत्रादीना प्रबन्धानतिक्रम्य " etc.

—Kālidāsa in Malavikāgnimitra Act I.

(४) " अणेण मम भादा हदो अणेण मम पिदा, अणेण मम सुदो "

From Pratijñā seems to be referred to in

हतोऽनेन मम भ्राता मम पुत्रः पिता मम ।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः ॥ ४४ ॥

vide काव्यालंकार of भामह chapter iv, verses 40–47

(५) सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥

— हर्षचरितम्

(६) लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

From Bālacarita and Cārudatta cited by Daṇḍin in Kāvyādarśa. II. 226

(७) " यो भर्तृपिण्डस्य कृते न युध्येत् "

From āratijñā cited by Vāmana in Kāvyālankāra, Adhikaraṇa. II.

(८) यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥

Cited by Vāmana in his Kāvyālaṅkāra, Adhikaraṇa, V.

(९) शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥

From Svapna. cited by Vāmana in Adhikaraṇa IV Adhyāya III.

(१०) भासम्मि जलणमित्ते कन्तीदेवे अ जस्स रहुआरे ।
सोबन्धवे अ बन्धम्मि हारियन्दे अ आणन्दो ॥

— गउडवहो-वैदग्ध्यवर्णनम् ।

Bombay Sanskrit and Prakrit Series No. 34–P. 221

(११) महाकविना भासेनापि स्वप्रबन्ध उक्तः—

नेवायुगं तद्धि न मैथिली सा
यमस्य रागपदवी मृदु चास्य चेत ।
लब्धा जनस्य यदि रावणमस्य काय
प्रोत्कृत्य तन्न तिलशो न वितृप्तिगामी ॥

अभिनवभारती-- P. 320. Comm. on नाट्यशास्त्र
(Gaekwad's Oriental Series)

(१२) सञ्चितपक्ष्मकपाट नयनद्वारं स्वरूपतडनेन (?) ।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥

Abhinavagupta's comm. on ध्वन्यालोक.

(१३) "क्वचित् क्रीडा यथा स्वप्नवासवदत्तायाम्"
From Abhinavabhāratı

also—अत एव विक्रमोर्वशीयस्वप्नवासवदत्ता (चे) नाटकमिति व्यवहरन्ति ।
Abhinavabhāratı, Page 17, Gaekwad's Oriental Series XXXVI

(१४) The following stanza from काव्यादर्श II. 280 is also given by Bhojadeva:—

'मृतेति प्रेत्य संगन्तुं यया मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥

अत्र स्थायिनो विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रतिरेव शृङ्गाररूपेण निष्पद्यते । अथावन्त्या वासवदत्ताया आलम्बनविभावभूतायाः सकाशादुत्पन्नो वत्सेश्वरस्य रतिस्थायिभावः, तस्याः पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दीप्यमानो मृतेत्यादिना वागारम्भानुभावेनानुमीयमानैर्हर्षधृतिप्रभृतिभिः सुखात्मकैर्व्यभिचारिभिः संसृज्यमानः करुणान्तर- संभोगः शृङ्गाराख्यां लभते ॥

— सरस्वतीकण्ठाभरणम् ।
पञ्चमो परिच्छेदः ।
(Kávyamāla No. 94–P. 595)

( १५ ) शकार किं प्रार्थनया प्रावारेणामिषेण वा ।
अकार्यवर्जं मे ब्रूहि किमभीष्टं करोमि ते ॥
-- सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदे ४११

the dislocated elements of which are found in मृच्छकटिक. It is, however, probable that Bhoja may have versified the prose of the मृच्छकटिक.

( १६ ) स्वप्नवासवदत्ते पद्मावतीमस्वस्थां द्रष्टुं राजा समुद्रगृहकं गतः । पद्मावतीरहितं च तदवलोक्य तस्या एव शयने सुष्वाप । वासवदत्तां च स्वप्नवदस्वप्ने ददर्श । स्वप्नायमानश्च वासवदत्तामाबभाषे । स्वप्नशब्देन चेह स्वापो वा स्वप्नदर्शनं वा स्वप्नायितं वा विवक्षितम् ।

-- from शृङ्गारप्रकाश of भोजदेव.

( १७ ) प्रशान्तरसभूयिष्ठं प्रशान्तं नाम नाटकम् ।
न्यासो न्याससमुद्भेदो बीजोक्तिर्बीजदर्शनम् ॥
ततोनुद्दिष्टसंहारः प्रशान्ते पञ्च सन्धय ।
स्वप्नवासवदत्ताख्यमुदाहरणमत्र तु ॥
आच्छिद्य भूपाद्वयसनाद्देवी मागधिकान्तरे ।
[1]न्यस्ता यतस्ततो न्यासो मुखसन्धिरयं भवेत् ॥
न्यासस्य च प्रतिमुखं समुद्भेद उदाहृतः ।
पद्मावत्या मुखं वीक्ष्य विशेषकविभूषितम् ।
जीवत्यावन्तिकेत्येतज् ज्ञात भूमिभुजा यथा ॥
उत्कण्ठितेन सोद्वेग बीजोक्तिर्नाम कीर्तनम् ।
एहि वासवदत्तेति क यासीत्यादि दृश्यते ॥
सहावस्थितयोरेकप्राप्त्यान्यस्य गवेषणम् ।
दर्शनस्पर्शनालापैरेतत्स्याद् बीजदर्शनम् ॥
चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥
किं ते भूयः प्रियं कार्यमिति वागत्र नोच्यते ।
तस्मादनुद्दिष्टसंहारमित्याहुर्भरतादय ॥

-- भावप्रकाश of शारदातनय

(१८) स्वदिशामात्मसात्कर्तुम् उदयनस्य पद्मावतीपरिणयोऽर्थशृङ्गारः स्वप्नवासवदत्ते, तृतीयस्तस्यैव वासवदत्तापरिणय कामशृङ्गारः।

— अमरकोशटीकासर्वस्वे सर्वानन्दविरचिते। P. 147.

(१९) " वृण सङ्कोचने " चुरादिर्दीर्घादिरिति धातुप्रदीप.। तथा च " वृण बाहुयुग " मिति भासकवि ।

टीकासर्वस्वे। P. 305.

(२०) यथा स्वप्नवासवदत्ते। नेपथ्ये सूत्रधार. उत्सारणा श्रुत्वा पठति। अये कथं तपोवनेऽप्युत्सारणा । (विलोक्य) कथ मन्त्री यौगन्धरायणो वत्सराजस्य राज्यप्रत्यानयन कर्तुकाम. पद्मावतीयजनेनोत्सार्यते।

—नाटकलक्षणरत्नकोशः of सागरनन्दिन ।

(२१) शृङ्गाराश्च त्रयः। धर्मशृङ्गारः। कामशृङ्गारः। अर्थशृङ्गार.।...
तत्राद्यो यथा । क्षामकायनाङ्के नन्दयन्त्या ब्राह्मणभोजनादि । स्वदेशामात्मसात्कर्तुमुदयनस्य पद्मावतीपरिणय अर्थशृङ्गार' । कामशृङ्गार' तस्यैव वासवदत्तापरिणयः।

—नाटकलक्षणरत्नकोशः। P. 117.

(२२) पादाक्रान्तानि पुष्पाणि सोष्म चेद शिलातलम्।
नूनं काचिदिहासीना मा दृष्ट्वा सहसा नता (गता ?)॥

नाट्यदर्पण of रामचद्र and गुणचद्र

(२३) यथा चारुदत्त —
शुष्कद्रुमगतो रौति आदित्याभिमुखं स्थितः।
कथयत्यनिमित्त मे वायसो ज्ञानपण्डित ॥

— नाटकलक्षणरत्नकोशे। P. 41.

(२४) A reference to the story of Avimaraka:—
शौनकमिव बन्धुमती कुमारमविमारक कुरङ्गीव।
अर्हति कीर्तिमतीय कान्त कल्याणवर्माणम् ॥

—कौमुदीमहोत्सवे II. 15, and v 9

(२५) चारुदत्ते पुनः सूत्रधारस्यापि प्राकृतम्

— शाकुन्तलव्याख्या

(२६) सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभि'।
परेतोऽपि स्थितो भास' शरीरेणैव नाटकै ॥

—अवन्तिसुन्दरीकथा दण्डिन् v II.
Cited in Ind. Hist. Quarterly 1929, 726

## APPENDIX D

### Stanzas attributed to Bhāsa in the Anthologies, but not found in the existing texts.

1 दग्धे मनोभवतरौ बालाकुचकुम्भसंभृतैरमृतैः ।
त्रिवलीकृतालवाला जाता रोमावली वल्ली ॥

सदुक्तिकर्णामृते

2 पेया सुरा प्रियतमामुखमीक्षणीयं
ग्राह्यः स्वभावललितो विकटश्च वेषः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः ॥

3 तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तमन्तः
कामी दरिद्र इव शोषमुपैति पङ्कः ॥

शार्ङ्गधरपद्धतौ

4 बाला च सा विदितपञ्चशरप्रपञ्चा
तन्वी च सा स्तनभरोपचिताङ्गयष्टिः ।
लज्जां समुद्वहति सा सुरतावसाने
हा कापि सा किमिव किं कथयामि तस्याः ।

सुभाषितावल्याम्

5 कपाले मार्जारः पय इति करॉल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

शार्ङ्गधरपद्धतौ

6 कठिनहृदये मुञ्च क्रोधं सुखप्रतिघातकं
लिखति दिवसं यातं यातं यमः किल मानिनि ।
वयसि तरुणे नैतद्युक्तं चले च समागमे
भवति कलहो यावत्तावद्वरं सुभगे रतम् ॥
सुभाषितावल्याम्

7 कृतककृतकैर्मायासख्यैस्त्वयास्म्यतिवञ्चिता
निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् ।
भवतु विदितं नेष्टाहं ते वृथा किमु खिद्यसे
छद्मसहना त्वं निःस्नेहः समेन समं गतम् ॥
सुभाषितावल्याम्

8 विरहिवनितावक्त्रौपम्यं बिभर्ति निशापति-
र्गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥
सदुक्तिकर्णामृते

9 यदपि विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥
सूक्तिमुक्तावल्याम्

10 दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥
सुभाषितावल्याम्

## APPENDIX D

**Stanzas attributed to Bhāsa in the Anthologies, but not found in the existing texts.**

1 दग्धे मनोभवतरौ बालाकुचकुम्भसंभृतैरमृतैः ।
त्रिवलीकृतालवाला जाता रोमावली वल्ली ॥

सदुक्तिकर्णामृते

2 पेया सुरा प्रियतमामुखमीक्षणीयं
ग्राह्यः स्वभावललितो विकटश्च वेषः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः ॥

3 तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तमन्तः
कामी दरिद्र इव शोषमुपैति पङ्कः ॥

शार्ङ्गधरपद्धतौ

4 बाला च सा विदितपञ्चशरप्रपञ्चा
तन्वी च सा स्तनभरोपचिताङ्गयष्टिः ।
लज्जां समुद्वहति सा सुरतावसाने
हा कापि सा किमिव किं कथयामि तस्याः ।

सुभाषितावल्याम्

5 कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

शार्ङ्गधरपद्धतौ

6 कठिणहृदये मुञ्च क्रोधं सुखप्रतिघातकं
लिखति दिवसं यातं यातं यमः किल मानिनि ।
वयसि तरुणे नैतद्युक्तं चले च समागमे
भवति कलहो यावत्तावद्वरं सुभगे रतम् ॥

सुभाषितावल्याम्

7 कृतककृतकैर्मायासख्यैस्त्वयास्म्यतिवञ्चिता
निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् ।
भवतु विदितं नेष्टाहं ते वृथा किमु खिद्यसे
ह्यहमसहना त्वं निःस्नेहः समेन समं गतम् ॥

सुभाषितावल्याम्

8 विरहिवनितावक्त्रौपम्यं बिभर्ति निशापति-
र्गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥

सदुक्तिकर्णामृते

9 यदपि विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥

सूक्तिमुक्तावल्याम्

10 दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥

सुभाषितावल्याम्

11 प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया
दृष्ट्वाग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् ।
उन्मादस्मितरोमलज्जितरसैर्गौर्या कथंचिच्चिरा-
द्बद्धः स्त्रीवचनात्प्रिये विनिहितः पुष्पांजलिः पातु वः ॥
सदुक्तिकर्णामृते

12 अस्या ललाटे रचिता सखीभि-
र्विभाव्यते चन्दनपत्रलेखा ।
आपाण्डुरक्षामकपोलभित्ता-
वनङ्गबाणव्रणपट्टिकेव ॥
दयितावाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥
शार्ङ्गधरपद्धतौ

---

## APPENDIX E

### Select Glossary

अट्टालः ( पृ. १४१ )–प्रासादादुपरि-तममुन्नतं स्थानम् ।

अतिपाति ( कार्यं ) ( पृ. ३३४ )–विलम्बासहम् ।

अधिकरणं ( पृ. ५४ ) –साक्षी.

अद्धमणसिलावट्टएहिं ( पृ. २२ )–अर्धमनःशीलपट्टकैः ।

अनभिवादकः ( पृ. ११६ )-प्रतिकूल-वाक् ।

अनिविष्टः ( कलत्रं ) ( पृ. ११५ )–अविवाहितः ।

अनूर्जिता ( पृ. ६० )– अमहती ।

अन्तलिक्खवासो ( पृ. १४५ )–अन्त-रीयवासः, परिधानवस्त्रम् ।

अपनयः ( पृ. ५४ )-अपनयनम् ।

अभ्यवपत्तुकामः ( पृ. ९ )-रक्षां परि-त्राणं वा चिकीर्षुः ।

अयः ( वासवदत्तायः ) ( पृ. ५७ )–शुभावहः विधिः ।

अवजिदिं ( पृ. १२ )-अपचितिं, निष्क्रयम् ।

अवतीर्णम् ( पृ. १ )–अवतारः ।

अश्वारोहणीयम् ( पृ. ६० )–तुरङ्गसादिबलम् ।

असमायुक्तः ( पृ. १०२ )–असम्यक् शिक्षितः ।

आढत्तो ( पृ. ९७ ) आधीकृतः ।

आधारय ( वृत्तान्तं ( पृ. ६६ )– ईषत् स्थापय, विरमय ।

आपन्नं ( पृ. ६६ )–विपद्गतम् ।

आर्यपुत्रः ( पृ. ४४ )–काञ्चुकीयेन भटेन वा प्रयुक्तोऽयं राज्ञ आमन्त्रणशब्दोऽपूर्वः ।

आवर्तयति ( विद्या ) ( पृ. १५४ )– चिन्तयति ।

आसन्नं ( पृ. ४४३ )–अन्तिकं, निकटम् ।

उग्घादो ( पृ. २५६ )–उद्घातः, कार्योपक्रमः ।

उपक्रोशः ( पृ. १०५ )–निन्दा ।

उल्लालिअ ( पृ. १९४ )–उल्लाल्य, उपच्छन्द्य ।

एकायनस्थः ( पृ. ६४ )–अगतिकः ।

ओवट्टिओ ( पृ. ५९ )–औपस्थितिक उपस्थितिं समीपावस्थानं नित्यमर्हति सः । अन्तिकचरः ।

कण्डिलं ( पृ. ८७ )–सुरायुक्तम् ।

कण्डिलसुण्डिगिणी ( पृ. ९४ )–कण्डिलशौण्डिकी कण्डिला-मत्ता मद्यविक्रयिणी ।

कपिशीर्षकम् ( पृ. १४१ )प्राकाराग्रम्

कर्कटकरज्जुः ( पृ. १४१ )–संदंशकयुक्ता रज्जुः ।

कर्मकारः ( पृ. ३३१ )–लौहकारः ।

कवोदसन्दाणअं ( पृ. २७३ )–कपोतसन्दानकं, कपोतनीडम् ।

कस्यूलिका ( पृ. ८१ )–निशाहिमजलं, अवश्यायसलिलम् ।

काकली ( पृ. २२८ )–सन्ध्युत्पादकश्चोरसाधनविशेषः ।

काक्षः ( पृ. ४४५ )–कटाक्षः ।

काल्यं ( पृ. २२८ )–प्रत्यूषः ।

केकरः ( पृ. ४५१ )–वलिरः, नेत्रवियुक्तः ।

कौतुकक्रिया ( पृ. १०६ ) मङ्गलकर्म ।

क्षुपाः ( पृ. १७० ) क्षुद्रवृक्षाः ।

क्षुप्रमाला ( पृ. ९७ )–अर्धचन्द्रमाला ।

गण्डभेद ( पृ. १२१ )–गण्डिभेदअ ? ग्रन्थिभेदकः, कुम्भीलकः ।

गृष्टिः ( पृ. १७१ )–सकृत्प्रसूता गौः ।

घोडअ ( पृ. ३९१ )–घोटकः, अश्वः ।

चाङ्गेरिका ( पृ. १४६ )–चाङ्गेरी वातपित्तहरा काचिदोषधिः ।

जम्भकः ( पृ. १७१,४५२ )–मायावी ।

डिण्डिकः ( पृ. ८२ )–विकृतवेषभाषो याचकः ।

तर्षः ( पृ. २८२ )–तृष्णा ।

त्रिवर्णा ( दशा ) ( पृ. १० )–त्रिरूपा ।
त्वरता ( पृ. ११५ )–त्वरा ।
दुर्गुणितम् ( पृ. १२२ )-दुरभ्यस्तम् ।
दूतसंपातः ( पृ. ५ ) दूतसंप्रेषणम् ।
देशिकः ( राजधर्मस्य ) ( पृ. ५ )-उपदेष्टा ।
नन्दिपटहः ( पृ. २५० )–आनन्द–सूचकः मङ्गलपटहः ।
नवयोगा ( पृ. ४६ )–नवतन्त्रीभिः प्रतियोजिता ।
निर्विघ्नः (पृ. १८१ )–कृतदारपरिग्रहः ।
निशान्तम् ( पृ. ३३१ )–मन्दिरं, गृहम् ।
निद्राणिता ( पृ. ८७ )-तेमनयुक्ता, दध्यादिव्यञ्जनयुक्ता ।
नैत्यकम् ( पृ. २७६ )-नित्यकर्म ।
न्यङ्गम् ( पृ. ६०, २८५ )-अवद्यम्, दोषः ।
पक्कणं ( पृ. ३९१ )-आभीरशबरादीनां निवासस्थानम् ।
पचन्तवासी ( पृ. ६२ )-प्रत्यन्तवासी, अनार्यदेशवासी ।
परिणीवित । ( पृ. ७३ )–स्थूलित, परिबृंहित ।
परिप्फन्दो ( पृ. २२१ )-परिस्पन्दः पराक्रमः, ऊर्जितं कर्म ।
परिवट्टामि ( पृ. २२६ )-परिवर्तयामि, प्रत्यर्पयामि ।
परिस्पन्दः ( पृ. ३९९ )–पराक्रमः ।
पिअक्खाणिअं (पृ. २५३ )-प्रियाख्यानिकं, प्रियवार्ता ।
पुष्परथः ( पृ. २५० )–क्रीडारथः ।
प्रक्षेपभूमिः ( पृ. १६० )–निषिद्धा भूमिः ।
प्रतिच्छन्दः ( पृ. १२२ )–प्रतिमा ।
प्रतिसरा ( पृ. ५८ )–हस्तधार्य रक्षा–सूत्रम् ।
प्रतीक्षः ( पृ. ७३ )–प्रतीक्षमाणः ।
प्रतीहारः ( अदेशकालः प्रतीहारस्य ), ( पृ. ४५ )–प्रवेशद्वारम् ।
प्रतोली ( पृ. १४१ )-अभ्यन्तरमार्गः ।
भृङ्गारः ( पृ. १०५ )-स्वर्णरचित–पात्रविशेषः ।
मग्गमदअणीए ( पृ. ६१ )-मार्ग–मदन्या, मार्गं मृगसमूहः तन्मद–यति इति मार्गमदनी, तया ।
मरुत्प्रपातः ( पृ. १५२ )–पर्वतपतन–स्थानं, भृग्वादि प्राणत्यागार्थम् ।
यवनिका ( पृ. ५४ )–मुखाच्छादन–वस्त्रं, अवगुण्ठनम् ।
योगः ( पृ. १२६ )–ध्यानम्, संगमश्च ।
रज्जविब्भट्टं ( पृ. २८३ ) राज्यविभ्रष्टं, राज्यभ्रंशः ।

लण्डुओ (पृ. १९२)- लण्डितः। उत्क्षिप्तः।

वड्ढिवस्सअजणो (पृ १९१)-वरि वस्त्यजनः, व्रतानुआपको धार्मिकः।

वण्णिआरं (पृ. १३५)-वर्णिकारं।

वयस्थः (पृ. २७९)-वयसि पूर्वे स्थितः। युवा।

वरण्टी (पृ. १९२)- वरण्ड, तृणसञ्चयः।

वादसोणिदं (पृ. २०)-वातशोणितम्, तत्क्षोभजनितविकारः।

विपट्ठाः (पृ. २००)-विमार्गाः।

विद्याराक्षितः (पृ. ४६६)-विद्याधरः।

वीरमानी (पृ. ८१, ३५५) वीरं आत्मानं मन्यते सः।

वेदालिआ (पृ. ७५)-वैतालिकी, वीणादिवादनवृत्तिः स्त्री।

व्यपाश्रयणा (पृ. ६)-प्रार्थना।

व्याक्षेपः (पृ. १५४)-चित्तविक्षोभः, चित्तभ्रमः।

शिरःस्थानानि (पृ. २६४)-प्रधानावस्थानि।

शृङ्गाटकम् (पृ. १४०)-चतुष्पथम्।

समाहिदं (पृ. २५)-समाहितं, सुस्थितम्।

संवर्ताग्निः (पृ. ३२५)-प्रलयाग्निः।

सानूकर्षा (पृ. ३९४)-रथस्य अधोधरणदारु अनुकर्षाख्यं, तद्युक्ता।

साविम (पृ. ६०) सावेगम्।

सुमणावण्णअ (पृ. २१)-सुमनोवर्णकं पुष्पलेपनादि।

श्रुतिविशेषणार्थं (पृ. ८)- श्रुतीनां विशेषपरिचयार्थम्।

सोपस्नेहता (पृ. २२८)-वृक्षलताबाहुल्यप्रयुक्तं स्निग्धत्वम्।

हस्तसारः (पृ. ४०४)-हस्तबल, बाहुबलम्।

---